**न तावदव्यभिचरितत्वम् । तद्धि न साध्याभाववदवृत्तित्वम् १ साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम् २ साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम् ३ सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् ४ साध्यवदन्याऽवृत्तित्वं वा ५ केवलान्वयिन्यभावात् ।**

लोकेऽव्यभिचरितत्वशब्दार्थे व्याप्तिव्यवहारात्तस्य व्याप्तिस्वरूपत्वं निराकरोति **न तावदिति** । अव्यभिचरितत्वं-अव्यभिचरितत्वशब्दार्थ । व्याप्तिरित्यनुषज्यते । तथा चाऽनुमनेनाऽव्यभिचरितत्वे व्याप्तिभेदः साधनीयः, तथा हि-अव्यभिचरितत्वं अनुमितिजनकतावच्छेदकव्याप्तिस्वरूपभिन्नं स्वविशेषसाध्याभाववदवृत्तित्वादियावद्वृत्त्यनुमितिजनकतावच्छेदकतावच्छेदकव्याप्तिस्वरूपभेदकत्वात्, यत्स्वविशेषतावद्वृत्तिभेदक तत्तद्भिन्नं, यथा पटः स्वविशेषयावद्वृत्तिपटादिभेदकः पटादिभिन्नश्च । सामान्यविशेषभावानुपपत्तिरेवाऽत्राऽनुकूलस्तर्कस्तेन नाऽप्रयोजकत्वम् । स्वरूपाऽसिद्धिं निराकरोति **तद्धीति** । हि यस्मात् **तत्** अव्यभिचरितत्वविशेषरूपं साध्याभाववदवृत्तित्वादिकं नाऽनुमितिजनकतावच्छेदकव्याप्तिस्वरूपम् । हेतुमाह **केवलान्वयीति** । केवलान्वयिसाध्यकानुमितिजनकज्ञाने विषयतयाऽभावादित्यर्थः । अन्यूनाऽनतिरिक्तवृत्तेरेवाऽवच्छेदकत्वेनाऽवच्छेद्यावच्छेदकभावानुपपत्तिरेवाऽत्रानुकूलस्तर्क इति भावः ।

केचित्तु **न तावदिति** । अव्यभिचरितत्वं नाऽनुमितिजनकतावच्छेदकव्याप्तिस्वरूपं दुर्वचत्वादित्यर्थः । ननु साध्याभाववदवृत्तित्वादिरूपतया सुवचत्वेन न दुर्वचत्वमत आह **तद्धीति** । अव्यभिचरितत्वं हीत्यर्थः । तत्र हेतुमाह **केवलान्वयीति** । न चाऽव्यभिचरितत्वे साध्याभाववदवृत्तित्वादिभेदे साध्ये केवलान्वयिनीत्यादिहेतोरनुकूलतर्कविरहेणाऽप्रयोजकत्वमिति वाच्यम् । निरुपधिसहचारस्यैवाऽत्रानुकूलतर्कत्वादित्याहुः ।

अन्ये तु **न तावदिति** । अनुमितिजनकतावच्छेदकव्याप्तिस्वरूपम् अव्यभिचरितत्वसामान्यभिन्नमित्यर्थः । सामान्यभेदे विशेषभेदकूटं हेतुमाह **केवलान्वयीति** । शेषं पूर्ववदित्याहुः । विस्तरस्त्वन्यतोऽवसेयः ।

ननु केवलान्वयिन्यभावादिति मूलोक्तं न सङ्गच्छते, तथाहि-स्वावच्छिन्नाभाववदवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाभाववत्त्वमेव व्याप्तिरस्तु, केवलान्वयिनि च तादृशसम्बन्धस्य साध्यतावच्छेदकव्यधिकरणतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाभावस्य केवलान्वयितया हेतौ सत्त्वादिति चेन्न । वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वे वृत्तिनियामकसम्बन्धघटिताऽव्याप्यत्वस्य वृत्तिनियामकत्वेऽपि वृत्त्यनियामकसम्बन्धघटितस्य तस्य वृत्त्यनियामकतया धनी चैत्रत्वादित्यत्र चैत्रो धनादित्यत्र चाऽव्याप्तिः, तादृशसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाऽभावस्याऽप्रसिद्धेः । न च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसम्बन्धित्वाभाववती हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नसम्बन्धिता तद्धर्मवत्त्वमित्युक्तौ न दोषः अभावश्च स्वाभाववदवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकः । अत्र स्वाभावश्च स्वरूपसम्बन्धावच्छिन्नप्रति-

साध्याभाववदवृत्तित्वस्याऽव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशंक्याह **साध्यवद्भिन्नेति २।** साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमर्थः।

अव्याप्यवृत्तीति। **कपिसंयोगी एतद्वृक्षत्वादित्यादावित्यर्थः। इदं च येन** योगिताकः, वृत्तित्वं च स्वरूपेणैवेति वाच्यम्। सम्बन्धिताया नानात्वे साध्यसम्बन्धित्वाभाववती या पर्वतीयवह्निसम्बन्धिता तन्निरूपकतावच्छेदकत्वस्य वह्नित्वे सत्त्वाद् धूमवान् वह्नेरित्यादावीतव्याप्तिः। न च यद्धर्मावच्छिन्नसम्बन्धितात्वावच्छेदेन निरुक्तसम्बन्धित्वाभावो निवेश्यते इति न सकलवह्निसम्बन्धितायां तथात्वमतो नोक्तदोष इति वाच्यम्। यद्धर्मावच्छिन्नसम्बन्धितात्वावच्छेदेनेत्यस्य व्यापकतारूपतया सिद्धान्तलक्षणापेक्षया लघुत्वाभावात् ईदृशपरम्परायाः संसर्गत्वे मानाभावाच्च।

केचित्तु स्वनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वस्य संसर्गत्वेऽसम्भवापत्त्याऽवच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वस्य ससर्गत्वं वाच्यम्, एवं च गुरुधर्मस्य प्रतियोगिताऽनवच्छेदकत्वे तद्रूपवान् रसादित्यत्रातिव्याप्तिः, तद्रूपत्वावच्छिन्नसम्बन्धित्वाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन तद्व्यक्तित्वे एव कल्पनीयतया उक्तावच्छिन्नाभाववद्वृत्तित्वस्य तद्रूपावच्छिन्नसम्बन्धित्वव्यधिकरणतया तदभावस्य हेतुतावच्छेदकावच्छिदकावच्छिन्नसम्बन्धित्वे सत्त्वात्, उक्तसम्बन्धिताव्यक्त्यभावनिवेशे च वह्निमान् धूमादित्यत्राव्याप्तिः। यदि च गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमङ्गीक्रियते तदैतस्य लक्षणान्तरत्वमवसेयमिति प्राहुः।

ननु साध्याभाववदवृत्तित्वमित्यत्र साध्याभाववति वर्त्ततेऽसौ साध्याभाववद्वृत्तिः, न साध्याभाववद्वृत्तिरिति साध्याभाववदवृत्तिः तस्य भावस्तत्वमित्येवं न सप्तमीतत्पुरुषगर्भो नञ्समासः असाध्याभाववद्वृत्तित्वमित्यापत्तेः। नापि न विद्यते वृत्तिर्यस्याः असाववृत्तिः, अवृत्तिक इति यावत्, तस्याभावस्तत्त्वम्, साध्याभाववति अवृत्तित्वमिति साध्याभाववदवृत्तित्वमित्येवं बहुव्रीहिगर्भसप्तमीतत्पुरुषः, साध्याभाववदन्वितसप्तम्यर्थस्य हेतुसम्बन्धिवृत्तित्वसामान्याभावेऽन्वयेन साध्याभाववन्निष्ठो हेतुसम्बन्धिवृत्तित्वसामान्याभाव इत्यर्थपर्यवसाने व्यभिचारिसाधारण्यात्। न च साध्याभाववन्निष्ठो निरूपकतासम्बन्धावच्छिन्नप्रतियोगिताको हेतुसम्बन्धिवृत्तित्वसामान्याभावस्तत्पर्यवसितोर्थः, तस्य च व्यभिचारनिरूपकाधिकरणेऽसत्त्वेन न व्यभिचारिसाधारण्यमिति वाच्यम्। तस्यापि ह्रदादियत्किञ्चिद्व्यक्तिनिष्ठत्वेन व्यभिचारिसाधारण्यस्य दुरुद्धरत्वात्। न च साध्याभाववति यावत्त्वविशेषणान्नैष दोष इति वाच्यम्। सकलसाध्याभाववन्निष्ठत्वेनेन पौनरुक्त्यापत्तेः इति चेत्।

अत्राहुः। साध्याभाववदन्वितसप्तम्यर्थस्याऽवृत्तित्वैकदेशवृत्तित्वेऽन्वयेन साध्याभाववद्वृत्तित्वाभाववत्त्वरूपार्थपर्यवसानेन बहुव्रीहिगर्भसप्तमीतत्पुरुषाङ्गीकारे दोषाभावात्। न च वृत्तस्य विशेषणयोगो नास्तीति वाच्यम्। चैत्रस्य गुरुकुलमित्याद्यनुरोधेन ससम्बन्धिकपदस्थले तदङ्गीकारादिति।

वस्तुतस्तु साध्याभाववतो न वृत्तिर्यत्रेति त्रिपदव्यधिकरणबहुव्रीह्युत्तरं त्वप्रत्ययः, साध्याभाववत इत्यत्र निरूपितत्वं षष्ठ्यर्थः, अन्वयश्चास्य वृत्तावित्यन्यत्र विस्तरः।

**इदं चेति।** साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक-

**म्बन्धेन येन रूपेण च साध्यत्वं तदवच्छिन्नस्य साध्याभावस्य प्रवेशमादृत्य, अन्यथा तु व्याप्यवृत्तिसाध्यकेऽपि विशिष्टाभावादिकमादाय दोषो बोध्यः ।**

साध्याभावस्य प्रवेशमादृत्येत्यर्थः । अन्यथा, प्रतियोगितायाः तदनवच्छेदे **व्याप्यवृत्ति साध्यकेऽपि**-वह्निमान् धूमादित्यादावपि. विशिष्टाभावादिकम् वह्नि-महानसीयवह्न्यभाव-मादाय समवायेन वह्न्यभावं चादाय, दोषो बोध्यः-अव्याप्तिरूपो दोषो बोध्य इत्यर्थः ।

**इदमुपलक्षणम्** । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धेन साध्याभाववत्त्वं विवक्षणीयम्, अन्यथा कालिकसम्बन्धेन वह्न्यभावाधिकरणपर्वतादौ हेतोः सत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिः स्यात् । न च स्वरूपसम्बन्धेन साध्याभावाधिकरणत्वं वाच्यमिति वाच्यम् । घटत्वाभाववान् घटत्ववानित्यादौ साध्याभावस्य घटत्वस्यानन्यतया तेन सम्बन्धेनाऽधिकरणाप्रसिद्धेरव्याप्तेः । न च स्वरूपसमवायान्यतरसम्बन्धेन साध्याभावाधिकरणत्वोक्तौ न दोष इति वाच्यम् । वन्ह्यभाववान् वन्ह्यवयवत्वादित्यादौ वन्ह्यवयवस्य साध्याभावस्य समवायेनाऽधिकरणे वन्ह्यवयवे हेतोः सत्त्वादव्याप्तेरापत्तेरिति ।

न च तथापि घटभिन्न घटत्वत्वादित्यादावव्याप्तिः, घटभेदवत्ताबुद्धिं प्रति समवायेन यथा घटत्ववानिति निश्चयो विरोधी तथा तादात्म्येन घटवानिति निश्चयो विरोधी तादृशप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकतादात्म्यसम्बन्धेन घटत्वस्वरूपसाध्याभावाधिकरणे घटत्वे हतोर्वृत्तेरिति वाच्यम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारताविशिष्टसाध्याभावत्वावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तित्वाभावस्य विवक्षितत्वात् । वै० स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेनेति, तथा च समवायसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारतावैशिष्ट्यस्य तादात्म्यसम्बन्धावच्छिन्नघटत्वनिरूपकतायामसत्त्वादिति ।

न च तादृशप्रकारतावैशिष्ट्यं सामान्यतो निरूपकतायां निवेश्यमलं साध्याभावत्वावच्छिन्नत्वस्य तत्र निवेशेनेति वाच्यम् । वन्हिमान् धूमादित्यादावव्याप्तिः, वन्हिमत्ताबुद्धि प्रति वह्न्यभावव्याप्यधूमवानिति निश्चयस्यापि प्रतिबन्धकतया तदवच्छेदकीभूतप्रकारतावैशिष्ट्यस्य धूमत्वावच्छिन्ननिरूपकतायामनपायात् । न च सम्बन्धघटकस्वावच्छेदकावच्छिन्नेत्यनेन स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वं विवक्षणीयम्, रूपवृत्तित्वं च निरूपकतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सम्बन्धेन, तथाच वन्ह्यभावव्याप्यधूमत्वगतसमुदायत्वे तादृशसम्बन्धेन निरूपकताया असत्त्वात्तादृशनिरूपकतया धारणाऽसम्भव इति वाच्यम् । विषयतात्ववान् प्रकारतात्वादित्यादावव्याप्तेः, प्रकारताविशेष्यकविषयतात्वप्रकारकसाध्यवत्ताबुद्धिं प्रति स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन प्रकारतात्ववान् विषयतात्वाभाव इति विपरीतनिश्चयप्रतिबन्धकतावच्छेदकीभूततादृशाधेयत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नप्रकारताविशिष्टनिरुक्तसम्बन्धावच्छिन्न-

**अव्याप्यवृत्तिसाध्यकेऽपि आकाशादिहेतावव्याप्त्यभावादाह** सद्धेता-वेति । **वृत्तिमद्धेताविति तदर्थः । अव्याप्यवृत्ति साध्यं यत्र तत्र सन् वर्त्त-मानो यो हेतुस्तत्रेत्यर्थः । तेन संयोगाभाववान् गुणत्वादित्यादावव्या-प्त्यभावेऽपि न क्षतिरिति वदन्ति ।**

निरूपकता तन्निरूपकाधिकरणे प्रकारतात्वे हेतोः सत्त्वादिति तत्त्वम् ।

न च संयोगेन वन्हिमत्ताबुद्धि प्रति कालिकेन वन्ह्यभाववान् स्वरूपेण वन्ह्यभाव-वान् कालिकेन वन्ह्यभाववान् पर्वत इति ज्ञानस्यापि निश्चयावीशिष्टनिश्चयत्वेन प्रति-बन्धकतया तत्प्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदककालिकसम्बन्धेन धूमस्य वन्ह्य-भाववद्वृत्तित्वाद्वन्हिमान् धूमादित्यादावव्याप्तिरिति वाच्यम् । ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्ध-कताया एव वक्तव्यत्वात् । प्रागुक्तक्रमेण साध्याभावत्वावच्छिन्ननिरूपकतानिवेशाच्च विशिष्ट-सत्ताभाववान् गुणत्वादित्यादौ च नाव्याप्तिः । यथाश्रुते साध्याभावस्य विशिष्टसत्तास्वरूपस्य सत्तानतिरिक्ततया तदधिकरणे गुणादौ हेतोर्वृत्तेरित्यन्यत्र विस्तरः ।

'असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयो भवती'ति नियमात् अव्याप्य-वृत्तिसाध्यकसद्धेतुत्वावच्छेदेनाऽव्याप्तिर्ग्रन्थकतुरभिमता, सा च न सम्भवति अव्याप्यवृत्ति-साध्यं यस्य स अव्याप्यवृत्तिसाध्यकः तादृशश्चासौ हेतुश्चेति व्युत्पत्त्या कपिसंयोगी गगना-दित्यत्राऽव्याप्तेरभावादित्यत उक्तम् **वृत्तिमद्धेताविति तदर्थ इति** । तथाच गगनहे-तोर्वृत्तिमत्त्वविरहादुद्देश्यतावच्छेदकानाक्रान्तया तत्राऽव्याप्तिविरहेऽपि न क्षतिः ।

**अव्याप्यवृत्ति साध्यं यत्रेति** । तथा च साध्यनिष्ठाऽव्याप्यवृत्तितानिरूपकाधिकर णवृत्तिहेतुतावच्छेदकावच्छेदेनाऽव्याप्तिरिति निष्कर्षे न दोषः । फलमाह **तेनेति** । यत्र हे त्वधिकरणे साध्यमव्याप्यवृत्ति तत्रेत्यर्थकरणेनेत्यर्थः । न क्षतिः—न व्यभिचारः । गुणत्वादेः साध्यनिष्ठाऽव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वविरहात् ।

**वदन्तीति** । अथात्र सत्पदं व्यर्थम्, अव्याप्यवृत्ति साध्य यत्रेति अव्याप्यवृत्तिसा-ध्यकः अव्याप्यवृत्तिसाध्यके हेतुरिति अव्याप्यवृत्तिसाध्यकहेतुरिति समासेनैवोक्तदोषविरहात् । न चैतादृशव्युत्पत्तिलाभार्थमेव सत्पदमिति वाच्यम् । तथापि संयोगाभावसाध्यकद्रव्यत्वहेतो र्निरुक्तोद्देश्यतावच्छेदकाक्रान्ततया तत्र द्वितीयलक्षणेनाऽपि साध्यवद्भेदाऽप्रसिध्याऽव्याप्ते रवारणात् इति चेन्न । अव्याप्यवृत्तिसाध्यकेत्यत्र न व्याप्यवृत्तिरव्याप्यवृत्तिरिति व्युत्पत्त्या निरवच्छिन्नवृत्तिकान्यसाध्यकहेताविवत्यर्थः । एवं च संयोगाभावस्य गुणादौ निरवच्छिन्न-वृत्तिकत्वेन तदन्यत्वविरहान्न तत्साध्यकहेतोरुद्देश्यतावच्छेदकाक्रान्तत्वमिति ।

वस्तुतः केवलान्वयिनि पृथग्दोषस्य दर्शनीयतया अव्याप्यवृत्तिसाध्यकेत्यस्य केवलान्वयि भिन्नसाध्यकेत्यर्थः । केवलान्वयिभिन्नत्वमन्योन्याभावप्रतियोगितावच्छेदकत्वमिति न दोषः ।

केचित्तु वादिवाक्यार्थविकल्पस्थले यथाकाममेव विकल्पितार्थोपन्यासः, न च पौर्वापर्यो-पन्यासे नियोगपर्यनुयोगोऽस्ति, किन्तु दीधितिकृता अवतरणव्याजेन प्रथमलक्षणे एवाऽव्य-वृत्तिसाध्यकाऽव्याप्तिर्न द्वितीयादिलक्षणे इति सूचितम्, नातो मणिकृन्न्यूनतापीति प्राहुः ।

अव्याप्तिः—व्याप्त्यसत्त्वम्, असद्धेतौ तस्याऽदोषत्वात्सद्धेतावित्युक्तमेवमग्रेपीत्यपि कश्चित् ।

**ननु साध्यवद्भिन्नो यः साध्याभाववानित्यर्थे साध्याभाववत्पदवैयर्थ्यं साध्यवद्भिन्नाऽवृत्तित्वमित्यस्यैव सम्यक्त्वात् । न चाऽवृत्तित्वेन समं साध्यवद्भिन्नस्याऽन्वयाविवक्षणात्साध्याभाववता सममेव तादात्म्येनाऽन्वयविवक्षणान्न वैयर्थ्यमिति वाच्यम् । तथापि साध्यवद्भिन्नात्मको यो मतुबर्थः सम्बन्धी तदवृत्तित्वस्यैव सम्यक्त्वे साध्याभावपदवैयर्थ्यध्रौव्यादतः**

---

न च साध्याभावे प्रतियोगिवैयधिकरण्यानिवेशेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र नाव्याप्तिरिति वाच्यम् । प्रतियोगिमद्भिन्नत्वस्य प्रतियोगिवैयधिकरण्यस्य प्रकृते साध्यवद्भिन्नत्वघटितमानेन तद्घटितस्यैव द्वितीयलक्षणत्वात् ।

ननु तथापि अवतरणमसङ्गतं, तथा हि अत्र सम्बन्धसामान्येन साध्याभाववत्त्वविवक्षणे कालो घटवान् कालपरिमाणादित्यत्र कालिकसम्बन्धेन साध्यतायां कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्याऽऽत्मादौ प्रसिद्धस्य कालिकसम्बन्धेन कालेऽपि सत्त्वादव्याप्तिः, अभावीयविशेषणतया तद्विवक्षणे धूमाभाववान् वह्न्यभावादित्यादौ साध्याभावस्य भावरूपतयाऽव्याप्तिः, भावाऽभावसाधारणाऽभावीयविशेषणताया असत्त्वात् । अतः साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताग्रहविरोधित्वनियामकसम्बन्धेन तद्वत्त्वं वाच्यम् कालिकसम्बन्धेन घटसाध्यकस्थले अभावीयविशेषणताविशेषस्य धूमाभावसाध्यकस्थले च संयोगस्य तथात्वान्नाव्याप्तिः । न चैवं कपिसंयोगाभाववान् ज्ञेयत्वादित्यादौ तादृशसम्बन्धाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। केवलान्वयिनीत्यादिना मूले एव तद्दोषाभिधानात् । एवं च कपिसंयोगादिसाध्यके केवलविशेषणताविशेषस्य न साध्यवत्ताग्रहविरोधित्वनियामकत्वं वृक्षादौ तेन सम्बन्धेन साध्याभाववत्ताग्रहेऽपि साध्यवत्ताज्ञानोदयात्, किन्तु निरवच्छिन्नविशेषणताविशेषस्यैव तेन सम्बन्धेन च साध्याभावस्य गुणादावेव सत्त्वादव्याप्तिविरहादिति चेन्न ।

अव्याप्यवृत्तित्वज्ञानशून्यकालीनसाध्याभाववत्ताज्ञानदशायां साध्यवत्ताज्ञानानुदयेन तत्काले च तस्य बाधप्रतिबन्धकतायामुत्तेजकत्वेन साध्यवत्ताज्ञानोत्पत्तौ बाधकाभावेन केवलाऽभावीयविशेषणताविशेषस्यैव तथात्वेनाऽव्याप्तिसम्भवादवतरणसङ्गतेः, अन्यथाऽप्रामाण्यज्ञानादिकालीनसाध्याभाववत्ताज्ञानकाले साध्यवत्ताज्ञानोदयेन निरवच्छिन्नविशेषणताया अपि तथात्वाऽसम्भवात् ।

केचित्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य यत्सम्बन्धावच्छिन्नप्रतियोगिताकाऽभावः साध्यं तेन सम्बन्धेन साध्याभाववत्त्वं विवक्षणीयं न तूक्तसम्बन्धेनेति नावतरणाऽसङ्गतिर्नाप्युक्तदोषा इति प्राहुः ।

अभावाऽभावस्याऽतिरिक्तत्वे स्वरूपेणैव साध्याभाववत्त्वनिवेशान्न तदसङ्गतिरित्यपि कश्चित् ।

वस्तुत उक्ताशयेनैव दीधितिकृताऽव्याप्तिमाशंक्याहेत्युक्तम् , अन्यथाऽव्याप्तेराहेत्येव ब्रूयात्, तथाचाऽऽपाततो यथाश्रुतेऽव्याप्तिशङ्कया लक्षणान्तरप्रणयनं न तु वस्तुगत्याऽव्याप्तिरपि उक्तरीत्या तदभावात् ।

**न वैयर्थ्यमितीति** । कर्मधारयपक्षेपीति शेषः । **सम्बन्धीति** । मतुप्पदस्थाने

सप्तमीसमासं समर्थ्य व्याचष्टे साध्यवद्भिन्ने इति । तथा च साध्यवद्भिन्नस्य वृत्तावनन्वयाद् यथासन्निवेशे न वैयर्थ्यम् । साध्याभावे साध्यवद्भिन्नवृत्तित्वविशेषणन्तु अव्याप्यवृत्तिसाध्यकसंग्रहार्थमेवेत्याशयः ।

साध्यवद्भिन्नवृत्तिद्रव्यत्वादिमति पर्वतादौ धूमादेः सत्त्वादव्याप्तिरसंभवो वा स्यादतः साध्याभावेति । न च कपिसंयोगी एतत्त्वादित्यादेः संग्रहार्थमधिकरणभेदेनाऽभावभेदमादृत्यैव लक्षणमिदं कार्यं, तथाच साध्यवद्भिन्ने योऽभावस्तद्वद्वृत्तित्वस्यैव सम्यक्त्वे साध्यपदवैयर्थ्यमिति वाच्यम् । प्रतियोगितासंसर्गेण साध्यीयत्वेनैव साध्याभावस्य प्रवेशो न त्वभावत्वेनाऽपीति तद्वैयर्थ्यशङ्काऽनवकाशात् ।

सम्बन्धिपदं योज्यम्, तेन प्रकृत्यसमभिव्याहारे मतुप्प्रत्ययस्याऽनुशासनाऽसिद्धत्वेऽपि न क्षतिः । **सप्तमीसमासमिति** । नन्वत्र साध्यवद्भिन्ने इति अधिकरणसप्तम्यनुपपन्ना, कारके इत्यधिकारीयेण सप्तम्यधिकरणे चेति सूत्रेण कारकाधिकरणवाचिन एव शब्दात्सप्तम्यनुशासनात् । न च क्रियाऽध्याहरणीयेति वाच्यम् । तथासति सापेक्षतयाऽसामर्थ्येन समासानुपपत्तेरिति चेत् । अत्राहुः—सप्तम्यधिकरणे चेति सूत्रस्थाऽनुक्तसमुच्चायकचकारेण कारकाधिकरणाऽवाचिनोऽपि शब्दात्सप्तम्यनुशासनेन सप्तम्यनुपपत्तेरभावादिति ।

**अव्याप्तिरसम्भवो वेति** । अवृत्तिगगनादिहेतोर्लक्ष्यत्वमते अव्याप्तिरित्युक्त तस्याऽलक्ष्यत्वे तु असम्भवो वेति । **आदृत्यैवेति** । अन्यथाऽव्याप्यवृत्तिसाध्यकाऽव्याप्तितादवस्थ्येन साध्यवद्भिन्नवृत्तित्ववैयर्थ्यात् । **तथाचेति** । अधिकरणभेदस्याऽभावभेदप्रयोजकत्वे इत्यर्थः । **साध्यपदवैयर्थ्यमितीति** । अधिकरणभेदेनाऽभावभेदाऽस्वीकारे तु साध्यवद्भिन्नवृत्तिघटाद्यभावस्य हेतुमति सत्त्वेनाऽव्याप्त्या न साध्यपदवैयर्थ्यमिति । साध्याभावेत्यत्र तत्पुरुषत्वात्पूर्वपदे लक्षणाया आवश्यकत्वे तेनैव निर्वाहेऽभावपदार्थविवक्षाया नोपयोग इत्याह **प्रतियोगितासंसर्गेणेति** । विलक्षणप्रतियोगितासम्बन्धेनेत्यर्थः । तादृशविलक्षणप्रतियोगितासम्बन्धेनान्यत्र साध्यीयत्वाभावादेव नाऽप्रसङ्गः । एतेन केवलप्रतियोगितासम्बन्धेन साध्यीयपरत्वे द्रव्यं पृथिवीत्वादित्यादौ साध्यवद्भिन्नगुणवृत्तिर्यः प्रतियोगितासम्बन्धेन साध्यीयः समवायस्तद्वद्वृत्तित्वस्य पृथिवीत्वे सत्त्वादव्याप्तिरिति निरस्तम् । अथाऽभावपदात्कथं तादृशविलक्षणप्रतियोगितालाभ इति चेद् । अभावपदसमभिव्याहृतपदान्तरस्य विलक्षणप्रतियोगितया स्वार्थविशिष्टबोधकत्वस्य व्युत्पत्तिसिद्धत्वात्, अन्यथा संयोगो घटाभाव इति व्यवहारापत्तेः । न च भाववाचकपदसमभिव्याहृताऽभावपदस्य भावभिन्नार्थकत्वान्नायमतिप्रसङ्ग इति वाच्यम् । तथापि विषयिता घटत्वाभावाभाव इति व्यवहारापत्तेर्दुर्वारत्वात् । **साध्यीयत्वेनेति** । साध्यविशिष्टत्वेनैवेत्यर्थः । अभावे साध्यीयत्वं न येन केनचित्सम्बन्धेन अतिप्रसङ्गात्, किन्तु प्रतियोगितासम्बन्धेन, तथाचाऽभावत्वनिवेशो व्यर्थ इत्याशयवानाह **न त्वभावत्वेनापीति** । प्रयोजनाभावादिति शेषः । **तद्वैयर्थ्यशङ्कानवकाशादिति** । तथा च साध्यपदाऽनुक्तौ साध्यवद्भिन्ने वर्तते यस्तद्वद्वृत्तित्वमित्येवार्थः स्यादेवं च वह्निमद्भिन्नह्रदादिवृत्तिप्रमेयत्वादिमति पर्वतादौ हेतोर्वृत्तेरसम्भवः स्यादतस्तन्निवेश इति भावः ।

वस्तुतः स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्ने वर्तते यः साध्यतावच्छेदकसम्बन्धेन साध्यीयोऽभावस्तद्वद्वृत्तित्वमर्थः, तथाच साध्यतावच्छेदकसम्बन्धेन साध्यीयत्वार्थकस्य साध्यपदस्याऽनुक्तौ स्वप्रतियोगितावच्छेदकीभूतसमवायादिसम्बन्धेन वन्ह्यादिमतोऽन्यस्मिन्पर्वतादौ यः समवायादिसम्बन्धावच्छिन्नवन्ह्यभावस्तद्वति धूमादेः सत्त्वादव्याप्तिः स्यादतस्तदुपात्तमिति नव्याः ।

**केचित्तु व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वरूपविरुद्धधर्माध्यासात्संयोगाद्यभावस्यैव द्रव्यगुणाद्यधिकरणभेदेन भेदो न तु गगनाद्यभावस्य मानाभावात्, तथाच साध्यवद्भिन्नवृत्तिगगनाद्यभाववति पर्वतादौ धूमादेः सत्त्वादव्याप्तिरतः साध्यपदमित्याहुः । तन्मन्दम् । गुणे गगनाद्यभावे गुणत्वादिसामानाधिकरण्यं न तु द्रव्ये गगनाद्यभावे तथात्वमित्यादिप्रतीत्या**

---

ननु आधेयतासम्बन्धेन पर्वतजलान्यतरविशिष्टवह्निमान् धूमादित्यादौ साध्यवद्भिन्ने जलादौ वर्तमानस्य साध्यनिष्ठप्रतियोगिताकस्य पर्वतजलान्यतरनिष्ठावच्छेदकताकस्याऽभावस्य पर्वते धूमस्य सत्त्वादव्याप्तिवारणायैवाऽभावपदसार्थक्यमस्त्वेव प्रतियोगितासम्बन्धेन साध्यीयत्वार्थकत्वमनुचितमिति चेन्न । अभावपदोपादानेऽपि तादृशावच्छेदकतायाः अभावस्वरूपतामतेऽभावत्वाऽक्षततया साध्यप्रतियोगिकत्वेन तद्दोषतादवस्थ्यात् । अभावपदस्य विलक्षणानुयोगितापरत्वे तु विलक्षणप्रतियोगितासम्बन्धेन साध्यीयत्वस्यैव सम्यक्त्वादिति ।

**साध्यतावच्छेदकसम्बन्धेन साध्यीयत्वार्थकस्येति** । ननु द्रव्यत्ववान् सत्त्वादित्यादौ साध्यवद्भिन्ने वर्तमानस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य द्रव्यत्वस्वरूपद्रव्यभेदाभावस्याऽधिकरणे हेतोर्वृत्तित्वादव्याप्तिरतस्तद्वारणाय पृथक्तया स्वातन्त्र्येण साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्याऽवश्यकतया साध्यपदस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितामात्रलाभार्थकत्वकथनमनुचितमिति चेन्न । जगदीशमतेऽभावाऽभावोऽभाव इति प्रत्ययानुरोधेनाऽभावाभावमात्रस्यैवाऽतिरिक्ततया तस्याऽप्यधिकरणभेदेन भिन्नतया साध्यवद्भिन्ने घटादौ वर्तमानस्य द्रव्यभेदाभावस्याऽधिकरणता घटे एवेति अव्याप्त्यप्रयोगादिति ।

नन्वभावपदोपादानमेतत्कल्पेऽपि व्यर्थमिति चेन्न । आधेयतासम्बन्धेन जलपर्वतान्यतरवद्वह्निमान् धूमादित्यादौ साध्यवद्भिन्ने जलादौ वर्तमानस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकस्याऽनुगतस्याऽवच्छेदकत्वस्याऽधिकरणे पर्वते हेतोर्वृत्तित्वादव्याप्तिप्रसङ्गात् । किञ्च समवायस्यैकत्वेन द्रव्यं पृथिवीत्वादित्यादौ साध्यवद्भिन्ने गुणादौ वर्तमानस्य साध्यीयस्याऽधिकरणे द्रव्ये हेतोः सत्त्वादव्याप्तिः स्यादिति ।

**मानाभावादिति** । व्याप्यवृत्तित्वादिविरुद्धधर्माध्यासस्य भेदकत्वं च 'एतानि न भेदकानी'त्यनेनाग्रे स्वयं दीधितिकृन्निराकरिष्यति ।

**अत्रेदं तत्त्वम्** । संयोगाभावनिष्ठयोर्व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वयोः प्रतियोगिसामानाधिकरण्यतद्वैयधिकरण्ययोश्च न विरोधः, तथाहि–संयोगाभावस्याऽव्याप्यवृत्तित्वं संयोगाभाव-

कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह **साध्यवदिति ३।**

---

**गगनाद्यभावस्यापि गुणत्वादिसामानाधिकरण्यतदभावयोर्विरुद्धधर्मयोः सम्भवादिति दिक्।**

**न च घटत्वघटाकाशसंयोगान्यतरत्वावच्छिन्नाभाववान् गगनत्वादित्यत्राव्याप्तिः साध्यवद्भिन्ने घटे वर्तमानस्य गगनघटसंयोगात्मकस्य साध्याभावस्याधिकरणे गगनत्वहेतोः सत्त्वादिति वाच्यम्। अभावाभावस्यातिरिक्ततामते एतल्लक्षणकरणादिति भावः।** भिन्नत्वे **इति। द्रव्यानिष्ठसंयोगाभावतो भिन्नत्वे इत्यर्थः।** मानाभावादिति। **तथाचाऽत्राऽव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिरिति भावः।**

---

धिकरणीभूतद्रव्यनिष्ठाऽन्यन्ताभावप्रतियोगित्व, गुणे तस्य व्याप्यवृत्तित्वं च संयोगाभावाधिकरणीभूतगुणनिष्ठाऽन्यन्ताभावाऽप्रतियोगित्वम्, अनयो श्च न विरोधः, गुणत्वादौ तदुभयसत्त्वात्। एव संयोगाऽभावस्य द्रव्ये प्रतियोगिसामानाधिकरण्यं संयोगाधिकरणीभूतद्रव्यवृत्तित्वं, तस्य गुणे प्रतियोगिवैयधिकरण्यं च संयोगाऽनधिकरणीभूतगुणवृत्तित्वम्, एतदुभयमपि न विरुद्धं, प्रमेयत्वादौ तयोः सत्त्वात्, तथाच संयोगाभावादेर्भेदकधर्माभावाद् भेदस्याऽसिद्ध्या कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिर्दुर्वारैव, संयोगवद्भिन्ने गुणादौ वर्त्तते यः कपिसंयोगाभावस्तस्यैतद्वृक्षेऽपि सत्त्वादिति।

**इदमत्रावधेयम्।** न हि वयं संयोगाभावादेर्विरुद्धधर्माध्यासबलाद् भेदं साधयामो येनोपदर्शितरीत्या विरुद्धधर्माध्यासाभावेन तस्य भेदो न स्यादपि तु लाघवेन, लाघवं च द्रव्यवृत्तिसंयोगाभावो न गुणादौ स्वीक्रियते अपि तु क्लृप्ततद्वृत्तिसंयोगादिमत्त्वप्रकारकप्रमाविशेष्यत्वाभावे एव संयोगाभावत्वं कल्प्यते अनन्तकर्माद्यधिकरणे संयोगाभावकल्पनामपेक्ष्य तथाविधैकाभावे संयोगाभावत्वकल्पने लाघवात्। न च संयोगादिमत्त्वप्रकारकप्रमाविशेष्यत्वाभावे द्रव्यभेदे संयोगिभेदादौ वा संयोगाभावत्व कल्प्यते इत्यत्र विनिगमकाभाव इति वाच्यम्। तादृशाभावानां समनियततयाऽभेदात्। एवं च द्रव्यवृत्तिसंयोगाभावगुणादिवृत्तिसंयोगाभावयोर्भेदः प्रामाणिक एवेति ध्येयम्।

**कर्मादौ संयोगाद्यभावस्येति शिरोमणिः।** अत्र च गुणादावित्यनुक्त्वा कर्मादाविति कथने किं बीजमिति चेद्। कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण इति मूलानुरोध एव।

गुणादावित्युक्तौ गुणस्याऽदिरिति व्युत्पत्त्या द्रव्यलाभेऽनन्वयः स्यात्, कर्मादावित्यत्र तथा व्युत्पत्त्या गुणलाभेपि न दोष इत्याशयेन तथोक्तमिति तु मान्याः।

अपरे तु कस्यचिन्मते द्रव्यकर्मगुणसामान्येत्यादिरीत्या पदार्थगणनात्तन्मताभिप्रायेणेदम्। कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण इत्यग्रेतनमूलमप्येतदभिप्रायकमेव, अत एवाऽग्रेपि साध्यसम्बन्धितावच्छेदकरूपव्याप्तिलक्षणव्याख्यायां स्वाधिकरणाऽवृत्तिसाध्यासमानाधिकरणत्वमिति निष्कर्षे सत्ताधिकरणकर्मादिवृत्तित्वस्य साध्याऽसमानाधिकरणकर्मत्वादौ सत्त्वादिति दीधितिकारो वदिष्यतीत्याहुः।

हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाऽव्याप्तेः सकलेति ४ ।
साकल्यं साध्याभाववति साध्ये च वैयधिकरण्यम् ।

हेतोरिति । न च साध्यवत्प्रतियोगिकाऽन्योन्याभावस्य केवलान्वयित्वा-दसम्भव एव वक्तुमुचितो नाऽव्याप्तिरिति वाच्यम् । वह्निमान् गगनादि-त्यत्राऽवृत्तिगगनादौ लक्षणसम्भवेन तस्यापि सद्धेतुतायाः स्वयं वक्ष्यमा-णत्वादिति भावः ।

साध्यपदस्य सिद्धिकर्मतत्तद्व्यक्तिपरतया तत्तद्व्यक्त्यवच्छिन्नान्योन्या-भावासामानाधिकरण्यरूपस्य द्रव्यं पृथिवीत्वादित्यादावेव सम्भवाद् ग-न्धवती पृथिवीत्वादित्यादावव्याप्तिकथनमित्यपि वदन्ति ।

ननु सकलस्य साध्यप्रतियोगिकाभावस्याऽधिकरणाऽप्रसिद्ध्या व्यभि-चारिणि अतिव्याप्तिवारणार्थं यदि साध्याभावस्य विशेषणं साकल्यं तदा

---

वस्तुतस्तु अव्याप्यवृत्तिसाध्यकेत्यादिना कपिसंयोगादिसाध्यक इव प्रमा...-दिप्रमात्वाद्यव्याप्यवृत्तिसाध्यकेऽप्यव्याप्तिरुक्ता भवति, प्रकृते ... प्रमात्वादिकमपि गृहीतम्, एवं च गुणादावित्युक्तौ गुणस्य प्रमात्वद्वह्निमत्त्वाभावदन्वयः स्यादतः कर्मादावित्युक्तमिति ध्येयम् ।

लक्षणसम्भवेनेति । इदमुपलक्षणम् । भेदे प्रतियोगिवृत्तित्वनिवेशे एतद्रूपवान् एत-द्रसादित्यादावपि लक्षणसमन्वयो बोध्यः । सिद्धिकर्मेति । साध्यपदं सिद्धिकर्मणि ...-गिकं, व्यापके तु सिद्धियोग्यतापुरस्कारेण लाक्षणिकम्, प्रकृते च व्यापकपरत्वे तात्पर्यग्रा-हकाभावाल्लक्षणा न युक्तेति मुख्यार्थपरिग्रहः । एतेन कर्मादावित्यनेनोक्तया कपिसंयोगादि-साध्यकाऽव्याप्त्या साध्यवत्प्रतियोगिकेति लक्षणावतरणमयुक्तं कपिसंयोगवद्वृक्षान्तरप्र-तियोगिकभेदस्यैतद्वृक्षे सत्त्वेनाऽत्रापि अव्याप्तितादवस्थ्यादिति निरस्तम् । सिद्धिकर्मत्वेन साध्यत्वे वृक्षान्तरस्य साध्यवत्त्वाभावात् ।

अन्ये तु साध्यवत्प्रतियोगिकेतिलक्षणे स्वावच्छिन्नप्रतियोगितावच्छेदकताकत्वसम्बन्धेन साध्यतावच्छेदकविशिष्टभेदस्यैव लक्षणे निवेशेन कपिसंयोगादिसाध्यकाव्याप्तेरभावेन तावत-रणाऽसङ्गतिः । न चैव साध्यवदन्येत्यादिलक्षणेन पौनरुक्त्यमिति वाच्यम् । तत्र साध्यताव-च्छेदकनिष्ठावच्छेदकताकसाध्यनिष्ठावच्छेदकताकप्रतियोगिताया अभावविशेषणतया निवेशेन साध्यवत्प्रतियोगिकेत्यत्र च सम्बन्धविधया तन्निवेशेन पौनरुक्त्याभावात् । न च तस्य सम्ब-न्धत्वे मानाभावः एतदस्वरसेनैव सकलेत्यादिलक्षणान्तरावतारादिति वदन्ति ।

तन्न समञ्जसम् । 'हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेने'ति दीधितिग्रन्थविरोधात् ।

अतिव्याप्तिवारणार्थमिति । न च धूमवान् वह्नेरित्यादौ साध्यप्रतियोगिकस्य तत्तद्धूमाभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकस्य तत्तद्विपक्षाऽवृत्ति-त्वावच्छिन्नाभावस्य च गुणादौ प्रसिद्धतया तत्र हेतोरभावसत्त्वात् कथमतिव्याप्तिवारणम् ? नापि वह्निमान् धूमादित्यादावव्याप्तिः, साध्यभावत्वावच्छिन्नानुयोगिताककूटत्वावच्छिन्नवत्त्वस्य

वह्निमान् धूमादित्यादिसद्धेतावव्याप्तिः, तत्रापि तत्तद्विपक्षाऽवृत्तित्वाव-च्छिन्नाभावरूपस्य तत्तत्सपक्षाऽवृत्तित्वावच्छिन्नाभावरूपस्य च साध्य-प्रतियोगिकाभावस्तोमस्याऽधिकरणाऽप्रसिद्धेरत आह—साकल्यं साध्याभा-वतीति। तथाच साकल्यं न साध्याभावविशेषणमतो नाऽप्रसिद्धिरि-ति भावः।

केचित्तु ननु धूमवान् वह्निरित्यादौ व्यभिचारिणि अतिव्याप्तिः, सा-ध्याभाववद्यत्किंचिन्निष्ठाभावप्रतियोगित्वादित्यत आह साकल्यं साध्याभावती-ति आहुः।

नन्वेवमपि साध्याभाववन्निखिलान्तर्गते महानसादौ वर्त्तमानस्याऽभा-वस्य प्रतियोगित्वं धूमादौ नास्तीति अव्याप्तितादवस्थ्यमत उक्तं साध्ये चेति। तथाच सपक्षो महानसादिर्न सकलसाध्याभाववानित्यदोषः।

प्राञ्चस्तु व्यभिचारिणि अतिव्याप्तिवारणार्थं साध्याभाववति यावत्त्व-विशेषणे दत्ते एव साध्ये यावत्त्वमव्याप्तिवारकतया सार्थकं भवति, अतः साध्याभाववत्येव साकल्यं प्राग्योजयति "साकल्यमित्यादिना" इत्येवम-वतारयन्ति। तन्मन्दम्। साध्याभाववति साकल्यानुक्तावातिव्याप्तिवार-कतयैव साकल्यविशेषणस्य सार्थक्यसम्भवात्, अन्यथा गगनाऽवृत्ति-धर्मवान् द्रव्यत्वादित्यादौ पटत्वादिलक्षणतत्तत्साध्यव्यक्त्यभाववद्गुणा-दिनिष्ठाभावप्रतियोगिनि द्रव्यत्वादावतिप्रसङ्गादिति ध्येयम्।

---

गुणादौ प्रसिद्धेरिति वाच्यम्। धूमाधिकरणतावान् वह्नेरित्यत्रैवाऽतिव्याप्तिवारणे ग्रन्थता-त्पर्यात्। किञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमेतत्कल्पे प्रयोजनविरहेण नास्त्येवेति यथाश्रुतमेव सम्यक्।

**तत्तद्विपक्षाऽवृत्तित्वावच्छिन्नाभावस्येति**। न च विपक्षाऽवृत्तित्वावच्छिन्ना-भावमादायाऽव्याप्तिसम्भवे सपक्षाऽवृत्तित्वावच्छिन्नाभावपर्यन्त विफलमिति वाच्यम्। तादृ-शाभावे हेतुसामानाधिकरण्यविशेषणप्रक्षेपेणापि वारणसम्भवे तत्पर्यन्तानुधावनम्। अत एव तद्रूपवान् तद्रसादित्यत्राऽव्याप्तिविरहादसम्भवो नोक्त इति।

ननूभयाभावविपक्षाऽवृत्तित्वावच्छिन्नाभावादिकमादाय सर्वत्राऽसम्भवसम्भवेऽव्याप्ति-दानमसङ्गतमिति चेन्न। गगनाभिन्नं घटत्वादित्यादौ साध्याभावकूटाधिकरणगगनस्यैव प्रसिद्धेः। न च घटवृत्तित्वविशिष्टगगनभेदाभावस्य गगनत्वप्रतियोगिक-स्वरूपेण यो घटाऽवृत्तिस्तदभावस्य च साध्यप्रतियोगिकतया तद्घटितकूटाधिकरणाऽप्र-सिद्ध्या तत्राप्यव्याप्तिरिति वाच्यम्। साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेन साध्याभा-वकूटवत्त्वस्य वक्तव्यतया गगनाभावस्य यः कालिकेनाऽभावस्तस्य स्वरूपेण साध्यतायां आत्मत्वादिहेतौ कालिकेन तादृशकूटाधिकरणमहाकाले हेतोरसत्त्वाल्लक्षणसङ्गतिरिति ध्येयम्।

**ध्येयमिति**। साध्याभाववति साकल्यविशेषणदानेनैव गगनावृत्तिधर्मवान् द्रव्यत्वा-दित्यादौ यत्किंचित्साध्याभाववति गुणादौ हेत्वभावसत्त्वेपि तस्य सकलसाध्याभाववन्निष्ठत्वा-

**इत्थं च प्रथमतः साध्ये साकल्यविशेषणोपादाने गुणत्वादेरपि सङ्ग्रहात्तदभाववान्न गुणादिः किन्तु गगनमात्रं तत्र हेतोर्वृत्तित्वान्नातिव्याप्तिः ।**

**ननु साध्यवत्यपि द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य सकलसाध्यप्र-**

---

भावान्नातिव्याप्तिः । तथा च साध्ये साकल्यविशेषणस्य नेदं प्रयोजनं सम्भवतीति । वस्तुतस्त्वं चाऽवश्योपादेयविशेषणान्तराऽवैयर्थ्यप्रयोजकत्वम् ।

ननु साध्याभाववति साकल्यप्रवेशं विनापि साध्ये साकल्यप्रवेश आवश्यकः, तथाहि साध्ये साकल्याऽप्रवेशे तद्वह्निगगनोभयवान् तद्धूमादित्यादावतिव्याप्तिः तत्र गगनाभावस्योभयाभावस्य वा विवक्षणीयप्रतियोगिव्यधिकरणत्वाभावेन लक्षणाऽघटकतया तद्वह्न्यभावस्यैव प्रतियोगिव्यधिकरणतया तद्वह्निष्ठाभावप्रतियोगित्वस्य हेतौ तद्धूमे सत्त्वात्, साध्ये साकल्यप्रवेशे च सकलसाध्यान्तर्गतगगनाभावस्य प्रतियोगिव्यधिकरणत्वाभावेन प्रतियोगिव्यधिकरणसकलसाध्याभावाऽप्रसिद्ध्या नातिव्याप्तिः । न च तथापि तद्वह्निगगनाऽन्यतराभावमादायाऽतिव्याप्तिर्दुर्वारैव, यदि च कालिकसम्बन्धेन प्रतियोगिव्यधिकरणतद्वह्नित्वविशिष्टाभाववति महानसादौ धूमाभावाऽसत्त्वेनाऽसम्भवस्तस्य साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकत्वेनाऽभावविशेषणात्तमादायाऽव्याप्तिः, एवमन्यतरत्वस्य प्रत्येकवृत्तिधर्मत्वेन तदवच्छिन्नाभावस्य सकलसाध्यनिष्ठप्रतियोगिताकत्वाभावात् तस्यैतद्वह्न्यभावसमनियततया लाघवेन तद्वह्नित्वस्यैव प्रतियोगितावच्छेदकत्वोपगमादित्युच्यते, तदा तद्वह्न्यभावस्याप्यतथात्वान्नोक्तरीत्या साध्ये साकल्यप्रवेशस्याऽऽवश्यकत्वमिति वाच्यम् । तद्वह्निधूमोभयाभावस्यैव प्रतियोगिव्यधिकरणतया निरुक्तविशेषणवत्तया तमादायैवोक्तरीत्या तदावश्यकत्वादिति चेन्न । साध्याभाववति साकल्याऽप्रवेशे साध्याभावे प्रतियोगिव्यधिकरणस्याऽव्यावर्त्तकतयाऽनुपादेयत्वेनोक्तरीत्या साध्ये साकल्यविशेषणव्यावृत्त्यसम्भवात् ।

यत्तु वह्निधूमोभयादिसाध्यकसद्धेतौ वह्निधूमघटत्रितयाद्यभावमादायाऽव्याप्तिवारणाय साध्यतानवच्छेदकीभूतव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाऽभावस्य विशेषणीयतया साध्ये साकल्याऽप्रवेशेपि नोक्तस्थले तद्वह्निधूमोभयाभावमादायाऽतिव्याप्तिः, तस्याऽनथात्वेन तद्वह्निगगनोभयाभावस्यैव तथात्वेन लक्षणघटकता तस्य च प्रतियोगिव्यधिकरणत्वाभावादिति । तच्चिन्त्यम् । समवायेन प्रमेयवत्साध्यके साध्यतानवच्छेदकाऽप्रसिद्ध्या साध्यतावच्छेदकेत्यादेरभावविशेषणत्वासम्भवात् उभयादिसाध्यके त्रित्वावच्छिन्नाभावस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविशेषणेनैव वारणेन तस्याऽव्यावर्त्तकत्वाच्च ।

केचित्तु साध्ये साकल्यस्याऽनावश्यकत्वेनाऽऽदौ न तदुपात्त, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविवक्षणे तस्याऽनिवेशात्, अत एव साध्ये च बोध्यमित्युक्तम्, वस्तुगत्या निवेशो नास्तीति चार्थ इत्याहुः ।

साध्ये साकल्यविशेषणदानेऽपि अव्याप्तितादवस्थ्यमित्याशङ्कते **नन्विति** । अथात्र साध्ये साकल्यविशेषणस्य कोऽर्थः ? यदि व्यापकत्वमर्थस्तथाच साध्यताव्यापकत्वं प्रतियोगितायां पर्यवसन्नं, तदा इतरबाधसहकृतस्थले महानसीयवह्निनिष्ठविधेयताव्यापकप्रतियोगिताकस्य महानसीयवह्न्यभावस्य पर्वतादौ सत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः। यदि च साध्यताव-

**तियोगिकाऽभावस्य सत्त्वादसम्भवः, किञ्च सकलपदोत्तरनाम्ना सकल-साध्यप्रतियोगिताकाऽभाववतोऽनुपस्थापनात्तेन समं सकलपदस्य कर्म-**

च्छेदकव्यापकप्रतियोगिताकाभावो निवेश्यते तदा 'एकव्यक्तिसाध्यकस्थले साध्यांशे साकल्य-विशेषणदानेऽपि अव्याप्तिरग्रे स्थास्यति इत्याशयेन नानेत्युक्तम्' इति जगदीशग्रन्थाऽसङ्ग-तिरिति चेन्न। साध्यसकलत्वावच्छिन्नाभावे एव तात्पर्यात्। तथाच साध्यतावच्छेदकावच्छि-न्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नाभावस्य पर्यवसिततया एकव्यक्तिसाध्यके तादृशकूटा-ऽप्रसिद्ध्याऽव्याप्तिकथनं, द्वित्वावच्छिन्नाभावमादाय नानाव्यक्तिसाध्यकेऽव्याप्त्यभिधानं च ( वह्निनिष्ठयावत्त्वावच्छिन्नाभावे तात्पर्यमिति ) न काप्यनुपपत्तिरिति ध्येयम्।

अथ वह्निवृत्तियावत्त्वनिष्ठसमवायसम्बन्धावच्छिन्नाऽवच्छेदकताकस्यैवाभावस्य प्रतियो-गिवैयधिकरण्याक्रान्ततया हेतुमत्यसत्त्वात्कथमव्याप्तिरिति चेन्न। साध्यतावच्छेदकावच्छिन्ना-नुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वमभावे निवेश्यम्, कूटत्वावच्छिन्नवत्ता च स्वप्रतियो-गिकत्वसम्बन्धेनेति। एवञ्च साध्यतावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वप्रतियो-गिकपर्याप्त्यनुयोगितावच्छेदकसाध्यतावच्छेदकनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्यैव विव-क्षणीयत्वात् एकव्यक्तिसाध्यके एतादृशसाध्यतावच्छदकनिष्ठाऽवच्छेदकत्वाऽप्रसिद्ध्याऽव्याप्तिः। नानाव्यक्तिसाध्यके चोभयाभावादिरेव तादृश इति यथाश्रुतग्रन्थानुरोधिनः।

**असम्भव इति** । अत्र(१)साध्यतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानव-

---

(१) वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिवारणायाऽतिरिक्तान्तं धर्मविशेषणम्। अथात्र साध्यता-वच्छेदकाऽतिरिक्तो यो धर्मस्तदनवच्छिन्नप्रतियोगितानिवेशेनैवोपपत्तौ व्यासज्यवृत्तित्वनिवेशो व्यर्थ इति चेन्न। व्यासज्यवृत्तित्वाऽनिवेशे साध्यतावच्छेदकाऽतिरिक्तत्वेन बहूनां धर्माणां निवेशे गौरवापत्तिरतो धर्म-सङ्कोचार्थं तन्निवेशः। यदि च साध्यतावच्छेदकातिरिक्तधर्मनिष्ठावच्छेदकत्वनिरूपकत्वसामान्याभावनिवेशे-नाऽनन्तधर्माऽप्रवेशात्तद्वैयर्थ्यमित्युच्यते, तदाऽखण्डाभावसम्पादकतया न व्यासज्यवृत्तित्ववैयर्थ्यम्। यत्तु व्यासज्यवृत्तित्वं विहाय निरुक्तसामान्याभावनिवेशे प्रमेयवह्निमान् धूमादित्यादावव्याप्तिः, गुरुधर्मस्य प्रति-योगिताऽनवच्छेदकत्वेन प्रमेयवह्नित्वस्य गुरुतयाऽनवच्छेदकत्वेन लक्षणाऽघटकत्वाद्, अतो वह्नित्वाव-च्छिन्नाऽभावसङ्ग्रहाय तदुपादानमावश्यकम्, अन्यथा तदीयप्रतियोगिताया साध्यतावच्छेदकाऽतिरिक्तवह्नि-त्वावच्छिन्नत्वेन वन्ह्यभावस्याप्यसङ्ग्रहः स्यात्। संयोगादिना प्रमेयवत्साध्यकस्थलानुरोधेन स्वानवच्छिन्न-प्रकारतावच्छेदकत्वरूपं साध्यतावच्छेदकान्यत्वं विवक्षणीयम्। नन्वेवं प्रमेयवह्निधूमोभयवान् धूमादित्यादाव-गतिरेव वह्निधूमोभयत्वावच्छिन्नाभावस्य लक्षणाघटकत्वादिति चेन्न। तत्र केवलवह्नित्वावच्छिन्नाभावस्यैव लक्षणघटकत्वात्। न च कालिकेन वह्नित्वविशिष्टस्य साध्यत्वे शैवालादिरूपहेतौ समवायेन वह्नित्ववि-शिष्टाभावमादायाऽव्याप्तिवारणाय साध्ये साकल्यमावश्यकमिति कथमुक्ताभावो लक्षणघटक इति वाच्यम्। यत्र वह्निधूमोभयत्वं शुद्धस्वरूपेण साध्यतावच्छेदकं तत्र पर्याप्तिसम्बन्धेन वह्निधूमोभयत्वावच्छिन्नाभाव-वारणाय प्रतियोगितायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकत्वस्यावश्यकतया तत एव समवायेन वह्नित्वविशिष्टाभाववारणसम्भवात् साध्ये साकल्यस्य व्यर्थत्वादिति। तदसत्। गुरुधर्मावच्छि-न्नसाध्यकहेतौ केवलान्वयिसाध्यकत्वेन तत्राव्याप्तेरिष्टत्वात्। गुरुधर्मस्याऽभावप्रतियोगिताऽनवच्छेदकत्वे तदवच्छिन्नसाध्यकानुमानमेव नास्तीत्यभिप्रायस्य वक्तुं शक्यत्वाच्च। अत एव लाघवेन साध्यतावच्छेदका-वच्छिन्नाभावनिवेशौचित्यवर्णनं सङ्गच्छते। अन्यथा तथानिवेशे गुरुधर्मावच्छिन्नसाध्यकाऽव्याप्तेरपरिहारात् साध्यतावच्छेदकावच्छिन्नेत्यनेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नत्वस्यैव विवक्षणीय-तया लाघवाऽनवकाशादिति दिक्।

साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः, तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः । न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः ।

अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिमद्धेतावव्याप्तेर्व्यभिचारिणि चाऽव्याप्यवृत्तावतिव्याप्तेर्वारणायाऽभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम् ।

---

**धारयोऽप्यनुपपन्न इत्यत आह** साध्याभावेति । **तथाच साध्याभाववत्येव साकल्यं देयं न तु साध्येऽपीति भावः । साध्याभाववति साकल्यदानस्य प्रयोजनमाह** तेनेति । **विपक्षैकदेशः—कश्चिद्विपक्षः, साध्यनिष्ठाकारस्य साध्यसामान्याभावस्य वा निवेशस्य फलमाह** नवेति । **एकव्यक्तिसाध्यके सकलसाध्योक्तौ अपि अव्याप्तिरग्रे स्यादित्यनेनाशयेन नानेत्युक्तम् ।**

अव्याप्यवृत्तीति । **कपिसंयोगी एतत्त्वादित्यादावित्यर्थः । यद्यप्यग्रे हेत्वभावस्यापि प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैव निवेशः करणीय इत्यव्या**

च्छिन्नत्वं प्रतियोगितायां निवेश्याऽसम्भवस्य वारणीयत्वं स्यादत **किञ्चेति ।**

दीधितौ **व्यभिचारिणि नातिव्याप्तिरिति** । अतिव्याप्तिः–लक्षणगमनं, सद्धेतौ तस्याऽदोषत्वाद् व्यभिचारिणीत्युक्तमेवमग्रेऽपि अन्यथाऽतिव्याप्त्युक्त्यैव व्यभिचारित्वलाभेन तद्वैयर्थ्यात् ।

वह्निमान् गगनादित्यत्राऽतिव्याप्तिः साध्याभाववति साकल्योपादानेऽपि न वार्या इति व्यभिचारिणीत्युक्तमित्यपि कश्चित् ।

**'न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिरिति' शिरोमणिः** । ननु नाना अनेका व्यक्तिराश्रयो यस्येति व्युत्पत्त्या नानाधिकरणत्वलाभे द्रव्यत्वसाध्यके सद्धेतावव्याप्त्यभावात् नाना व्यक्तिः साध्यं यस्येति व्युत्पत्त्या साध्ये नानात्वदाने शब्दवान् गगनत्वादित्यादौ लक्षणसम्भवान्नानाव्यक्तिसाध्यकसद्धेतुत्वावच्छेदेनाऽव्याप्तिदानाऽसङ्गतिः । न चोभयाभावादिकमादाय तत्राऽव्याप्तिसम्भव इति वाच्यम् । साध्याभावे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकतया तत्र तादृशाभावप्रतियोगितावच्छेदकाद्वित्वावच्छिन्नाधिकरणाऽप्रसिद्धेः, साधनसमानाधिकरणवृत्ति यद् द्वित्वं तदवच्छिन्नाभावस्य च गगनेऽसत्त्वादिति चेन्न । नानाव्यक्तिसाध्यकत्वं स्ववृत्तित्वस्वाऽसमानाधिकरणत्वेतरवृत्तित्वोभयसम्बन्धेन वस्तुविशिष्टसाध्यतावच्छेदककत्वम् व्यधिकरणोभयवृत्तिसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वमिति नानुपपत्तिः ।

दीधितौ **अव्याप्तेरिति** । अस्य वारणायेत्यनेनाऽन्वयः । व्याप्यवृत्तिसद्धेतावित्यत्र सद्धेतौ व्याप्यवृत्तित्वोत्कीर्त्तनप्रयोजनमाह—**यद्यपीति । अव्याप्यवृत्तिहेताविति ।** कपिसंयोगी कपिविभागादित्यादावित्यर्थः । **अव्याप्तिः सम्भवतीति** । कपिसंयोगाभाववति वृक्षादौ प्रतियोगिव्यधिकरणकपिविभागाभावविरहात्, तथाच व्याप्यवृत्तित्वोत्कीर्त्तनं

**प्यवृत्तिहेतावपि अव्याप्तिः सम्भवति, तथापि यथाश्रुतमूलस्य न तत्राऽव्याप्तिरित्यावेदयितुं व्याप्यवृत्तिहेतूक्तिः** । व्यभिचारिणीति । **एतद्वृक्षत्ववान् कपिसंयोगादित्यादावित्यर्थः** । अभावद्वये इति । **साध्याभावे हेत्वभावे चेत्यर्थः** ।

---

व्यर्थमेवेति भावः । **यथाश्रुतमूलस्येति** । प्रतियोगिवैयधिकरण्याघटितस्येत्यर्थः । व्याप्यवृत्तिहेतूक्तिः, तथाच हेत्वभावे तद्विशेषणाननुसन्धाने व्याप्यवृत्तिहेतुकस्थलेऽव्याप्तिर्भवतीत्यभिप्रायेण तदुक्तमिति भावः ।

अथ तदुक्तावपि कपिसंयोगाभाववान् गुणत्वादित्यादौ अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतुत्वावच्छेदेनाऽव्याप्तिविरह इति चेन्न । अव्याप्यवृत्तिसाध्यकत्वं हेत्वधिकरणवृत्तिसाध्याभावकसद्धेतुत्व तस्य प्रकृते विरहान्नानुपपत्तिः । न चोक्तस्थले प्रतियोगिवैयधिकरण्यनिवेशे प्रतियोग्यनधिकरणाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । हेत्वधिकरणीभूतं यत्प्रतियोग्यधिकरणं तदन्यवृत्तिसाध्याभावस्य विवक्षितत्वात्, उक्तस्थले तथाविधस्वगुणादिभेदस्य प्रसिद्धेरिति ध्येयम् ।

न च प्रतियोगिवैयधिकरण्योपादानेऽपि कपिसंयोगी एतत्त्वादित्यत्राऽव्याप्तिस्तदवस्थैव, गुणे कपिसंयोगाभावस्य प्रतियोगिवैयधिकरण्यात्तदाश्रयस्य तस्य द्रव्ये सत्त्वादिति वाच्यम् । प्रतियोगिवैयधिकरण्यविशिष्टसाध्याभावस्य प्रकृते विवक्षणात् तादृशविशिष्टसाध्याभावाधिकरणत्वं न द्रव्ये विशिष्टाऽधिकरणत्वस्याऽतिरिक्तत्वात् ।

नन्वत्र प्रतियोगिवैयधिकरण्यं यदि प्रतियोग्यधिकरणाऽवृत्तित्व तदा कपिसंयोगी एतत्त्वादित्यत्राऽव्याप्तितादवस्थ्यम्, संयोगाधिकरणाऽवृत्तित्वाविशिष्टस्य संयोगाऽभावस्याऽप्रसिद्धेः । न च प्रतियोग्यनधिकरणवृत्तित्वं तदिति वाच्यम् । द्रव्यत्वाभाववान् गुणत्वादित्यत्र द्रव्यत्वरूपसाध्याभावस्य प्रतियोगिनो नित्यत्वादिविशिष्टद्रव्यत्वाभावस्याऽधिकरणे वर्त्तमानतया तथाविधाऽभावाऽप्रसिद्ध्याऽव्याप्तेः । न च यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वमेव विवक्षणीयम्, उपदर्शितस्थले च द्रव्यत्वरूपसाध्याभावस्य द्रव्यत्वाभावत्वरूपयत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणे वृत्तित्वान्नाऽव्याप्तिरिति वाच्यम् । कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तेः कपिसयोगाभावाभावस्य यत्किञ्चित्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वं तदवच्छिन्नस्याऽनधिकरणे आत्मनि आत्मत्वाभावविरहात्, इति चेत् । मैवम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणं साध्यनिष्ठतादृशप्रतियोगिताकाभावाधिकरणमित्यस्य तथाविधसाध्याभावाऽधिकरणान्तेन विवक्षणादिति ।

(वस्तुतस्तु अधिकरणभेदेनाऽभावभेदमादृत्यैव लक्षणमिद कार्यमन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तितादवस्थ्यम् प्रतियोग्यनधिकरणवृत्तित्वविशिष्टसाध्याभावाधिकरणताव्यापकप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणवृत्तित्वविशिष्टहेत्वभावत्वावच्छिन्नाधिकरणताकत्वमित्येव वा सम्यक् । कुत्रचिद्‌जागदीश्यामेव पाठोयं दृश्यते )

**ननु** प्रतियोग्यनधिकरणवृत्तित्वविशिष्टसाध्याभावव्यापकत्वेनैवोपपत्तौ अधिकरणताप्रवेशो व्यर्थ इति चेन्न । तादृशाऽधिकरणताव्यापकत्वं तादृशाऽधिकरणताश्रयवृत्तिभेदप्रतियोगिताऽनवच्छेदकत्वं, न तु तादृशाधिकरणतात्वावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तिभेदप्रतियो-

**अत्र च साध्याभावे प्रतियोगिवैयधिकरण्यं साध्यतावच्छेदकसम्बन्धे-न प्रतियोगिनो यदधिकरणं तदवृत्तित्वम्, तेन धूमाद्यभाववतोऽपि अयः-पिण्डादेः कालिकसम्बन्धेन धूमादिमत्त्वेऽपि नातिव्याप्तिः ।**

---

गिताऽनवच्छेदकत्वम्, नन्व यदि [illegible] प्रत-क्लृप्ते अधिकरणभेदेनाऽभावभेदाभावेन प्रतियोगिव्यधिकरणवृत्तित्व [illegible] केवलसाध्याभावाऽनतिरिक्ततया कपिसंयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तितादवस्थ्यमतः प्रति-योग्यनधिकरणवृत्तित्वविशिष्टसाध्याभावत्वावच्छिन्ननिरूपकताकाधिकरणतापर्यन्तम् आवश्यक इति तल्लाभायैवाऽधिकरणतापदमिति भावः ।

ननु प्रतियोग्यनधिकरणवृत्तित्वविशिष्टहेत्वभाव इत्यस्यैव सम्यक्त्वेऽधिकरणतापर्यन्तं विफलमिति चेन्न । अधिकरणभेदेनाऽभावभेदाऽस्वीकारेण एतद्वृक्षत्ववान् कपिसंयोग इत्यत्र एतद्वृक्षत्वाभाववति वृक्षान्तरे विशिष्टस्याऽनतिरिक्ततया प्रतियोगिव्यधिकरणत्वविशिष्टस्य वृत्तित्वादतिव्याप्तिः स्यादिति ।

किञ्च प्रमेयत्वादिना सर्वेषां व्यापकत्वाद् व्यभिचारिमात्रेऽनव्याप्तिः [illegible] हेत्वभावे व्यापकतावच्छेदकत्वं वाच्यमित्येतल्लाभार्थमेवाधिकरणतापदमिति ध्येयम् ।

ननु साध्यतावच्छेदकावच्छिन्नानधिकरणत्वव्यापकहेतुतावच्छेदकावच्छिन्नानधिकरणत्व-मित्यस्यैव सम्यक्त्वे साध्याभावहेत्वभावयोरप्रवेशेऽपि क्षत्यभाव इति चेन्न । यथाश्रुतनिवेशे वैयर्थ्याभावात् ।

एतेन साध्यतावच्छेदकावच्छिन्नानधिकरणत्वव्यापकप्रतियोगिव्यधिकरणहेत्वभावत्वाव-च्छिन्नाऽधिकरणताकत्वमित्यस्यैव सम्यक्त्वे साध्याभावनिवेशो व्यर्थ इति निरस्तम् । य-थाश्रुतमूलात्प्रतियोगिताविशिष्टान्या या साध्याभावाधिकरणता इत्येवार्थः प्रतीयते। वै० स्वनि-रूपकाभावीयत्व—स्वावच्छेदकावच्छिन्नसामाधिकरण्योभयसम्बन्धेन । एवं च घटाभावादि-वारणाय साध्याभावनिवेशो आवश्यक इति ।

**नातिव्याप्तिरिति** । एवं च धूमाभावाधिकरणाऽयःपिण्डादेः साध्यतावच्छेदकसंयोग-सम्बन्धेन धूमादिमत्त्वविरहान्नातिप्रसङ्ग इत्यर्थः । नन्वत्र महाकालभिन्नं घटत्वादित्यत्र महा-कालभेदस्य कालिकेनाधिकरणत्वस्य अन्येषामपि स्वरूपेणाऽधिकरणत्वसत्त्वात्प्रतियोगिव्यधि-करणाऽप्रसिद्ध्याऽव्याप्तिसम्भवे तत्परित्यागोऽनुचितः अनुपपत्तिसम्भवे आपत्तेरन्याय्यत्वादि-ति चेन्न । यत्किञ्चित्सम्बन्धेनाधिकरणत्वोक्त्याव्याप्तिविरहादिति । सम्बन्धांशे यत्किञ्चित्त्व-निवेशस्तु सम्बन्धविशिष्टत्वं हेतौ व्याप्तिः । वै० स्वावच्छिन्नप्रतियोगिनिष्ठानिरूपकताकाधि-करणतावद्भिन्नवृत्तिसाध्याभावव्यापकाभावप्रतियोगित्वसम्बन्धेन । प्रकारमुद्रया निवेशश्च स-म्बन्धत्वसमानाधिकरणभेदयावृत्तिधर्मावच्छिन्नससर्गताकप्रतियोग्यधिकरणतावद्भिन्नवृत्तिसाध्या-भावव्यापकाभावप्रतियोगित्वं हेतौ व्याप्तिः । सम्बन्धसामान्यनिवेशस्तु सम्बन्धविशिष्टान्य-त्वम् । वै०प्रागुक्तसम्बन्धेन । प्रकारमुद्रया निवेशश्च तादृशप्रतियोगिताकूटवत्त्वमिति ।

न च तथापि धूमाभाववतः अयःपिण्डीयपरमाणोरपि सकलसाध्याभाववदन्तर्गततया तस्य च कालिकसम्बन्धेनापि धूमानधिकरणतया तन्निष्ठाभावप्रतियोगित्वस्य हेतौ विरहान्ना-

हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः ।

हेत्वभावे प्रतियोगिवैयधिकरण्यन्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वघटितं वाच्यम् , तेन अयमात्मा ज्ञानादित्यादौ साध्याभाववतो घटत्वादेर्विषयतया हेत्वभावप्रतियोगिमत्त्वेपि नाव्याप्तिः ।

हेत्वभावोऽपीति । अपिना साध्याभावसमुच्चयः, तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः । यद्यपि साध्याभावोऽपीत्येव क्रमानुरोधाद्वक्तुमुचितम्, अपिशब्दादेव हेत्वभावस्य लाभसम्भवात् । तथापि तत्प्रतियोगित्वं चेत्यग्रेतनतत्पदेनाऽनिर्दिष्टहेत्वभावपरामर्शाऽसम्भवाद्, हेत्वभावप्रतियोगित्वं चेत्यभिधाने च ग्रन्थगौरवं स्यादितीत्थमभिधानम् । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगीति प्रतियोगिपदं प्रतियोगितावच्छेदकताघटितिव्याप्तिरिति वाच्यम् । शिरोमणिमते द्व्यणुके परमाणौ च मानाभावात् त्रसरेणावेव विश्रान्तेरिति तत्स्वीकारे तु समवायेन वह्निसाध्यकधूमहेतौ व्यभिचारिणि अतिव्याप्त्यापत्तेरिति ध्येयम् ।

प्रतियोग्यनधिकरणत्वघटितमिति । एवं च यादृशप्रतियोगितावच्छेदकाऽनधिकरणवृत्तित्वमर्थः । अन्यथोक्तरीत्या गुणाभाववान् द्रव्यत्वाभावादित्यत्राऽव्याप्तिः । प्रतियोगितावच्छेदके यत्किञ्चित्त्वनिवेशे च घटः कपिसंयोगादित्यादावतिव्याप्तिः स्यात् । तथा च यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणसाध्यनिष्ठतादृशप्रतियोगिताकाभावाधिकरणं यद् यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेतुतावच्छेदकावच्छिन्नतादृशप्रतियोगित्वं व्याप्तिरिति समुदितार्थः ।

प्रतियोगितावच्छेदकसम्बन्धेन प्रतिवैयधिकरण्यनिवेशस्य फलमाह **तेनेति** । **नाव्याप्तिरिति** । एवं च प्रतियोगितावच्छेदकीभूतसमवायसम्बन्धेन ज्ञानस्वरूपप्रतियोग्यनधिकरणे घटादौ ज्ञानाभावसत्त्वादव्याप्तिर्नास्तीति ।

नन्वत्र वह्निमान् धूमादित्यत्र साध्याभाववतो घटादेर्धूमावयवादेश्च कालिकेन समवायेन च हेत्वधिकरणे प्रतियोगिनः सत्त्वेन प्रसिद्धस्थलेऽव्याप्तिसंभवे तत्परित्यागोऽनुचित इति चेन्न । साध्याभाववति साकल्यविशेषणसत्त्वेऽसत्त्वे चोभयथैवाऽयमात्मा ज्ञानादित्यत्राऽव्याप्तिः, प्रलयान्तर्भावेण धूमाभावसत्त्वाद् वह्निमान् धूमादित्यत्र साकल्याऽनुक्तावव्याप्तिविरहादिति । अत एव यत्समानाधिकरणा इति ग्रन्थे स्वविशिष्टपदसत्त्वेऽसत्त्वे चोभयथा नाव्यप्तिरिति वक्ष्यति ।

साध्याभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यविवक्षायाः फलमाह **तेनेति । नातिव्याप्तिरिति ।** गुणादौ विशिष्टसत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणसाध्याभावस्य सामान्यादावेव सत्त्वात्तत्र हेत्वभावसत्त्वेऽपि नातिव्याप्तिरित्यर्थः । नन्वत्र घटवृत्तित्वविशिष्टवाच्यत्ववान् घटत्वादित्यादौ साध्याभावप्रतियोगिशुद्धवाच्यत्वाऽनधिकरणाऽप्रसिद्ध्याऽव्याप्तिसम्भवेऽतिव्याप्तिदानमनुचितमिति चेन्न । प्रतियो-

तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम्, तेन द्रव्यत्वादौ साध्ये

कसम्बन्धेनाऽवच्छेदकस्य वैशिष्ट्यलाभाय, तेन ह्रदादौ कालिकादिस
म्बन्धेन धूमत्वावच्छिन्नस्य काष्ठादेः संयोगसम्बन्धेन सत्त्वेऽपि नाव्याप्तिः।
तत्प्रतियोगित्वं—हेत्वभावप्रतियोगित्वम् । हेतुतावच्छेदकरूपेणेति । हेतुताव-
च्छेदकसम्बन्धेनेत्यपि बोध्यम्, तेन आत्मभिन्नं द्रव्यत्वादित्यादौ साध्या-
भाववति आत्मनि वर्त्तमानस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियो-
गिव्यधिकरणस्य कालिकादिसम्बन्धावच्छिन्नद्रव्यत्वत्वावच्छिन्नाभाव-
स्य प्रतियोगित्वेऽपि द्रव्यत्वस्य नातिव्याप्तिः ।

न च हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्योक्त्यैवाऽतिव्या-
प्तिवारणसंभवात् हेतुतावच्छेदकसम्बन्धेन प्रतियोगित्वविवक्षा व्यर्थेति
वाच्यम् । तथासति निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ निर्वह्नित्व-
भेदमादाय लक्षणसम्भवे निर्धूमत्वव्याप्येत्याद्युत्तरग्रन्थे वक्ष्यमाणाऽव्या-
प्त्यलग्नकतापत्तेरिति ध्येयम् ।

हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यविव-
क्षायाः फलमाह तेन द्रव्यत्वादाविति । अन्यथा साध्याभाववति गुणादौ विशि-
ष्टसत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरणत्वादव्याप्तिरेव स्यादि-
ति भावः । अत्र द्रव्यत्वस्य साध्यतायां सकलसाध्याऽप्रसिद्ध्याऽव्याप्तेरु-
क्तविवक्षयाऽप्यप्रतीकारादादिपदम्, तेन गुणवत्त्वादिसाध्यस्योपसंग्रहः ।

व्यधिकरणत्वहेत्वधिकरणत्वोभयाभाववदधिकरणवृत्तित्वस्य साध्याभावे वक्तव्यतयाऽव्या-
प्तिवारणात् । न चाऽव्याप्तिवारणायोक्तप्रयासाऽपेक्षया प्रतियोगितावच्छेदकावच्छिन्नत्वनिवे-
श एव न्याय्य इति वाच्यम् । सम्पूर्णलक्षणे कपिसंयोगाभाववान् गुणत्वादित्यत्राऽव्याप्तिवा-
रणाय तथानिवेशस्याऽऽवश्यकत्वादिति ध्येयम् ।

नाव्याप्तिरिति । एवं च ह्रदादौ प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेन धू-
मत्वावच्छिन्नस्य धूमादेः संयोगेनाऽसत्त्वान्नाव्याप्तिः । न च कालिकसम्बन्धेन धूमत्वावच्छिन्न-
काष्ठादौ प्रतियोगितावच्छेदकावच्छिन्नत्वसत्त्वेऽपि प्रतियोगित्वविरहात्प्रतियोगिपदस्य यथा-
श्रुतार्थकत्वे एवाऽव्याप्तिवारणात् प्रतियोगितावच्छेदकताघटकसम्बन्धपरत्वं व्यर्थमेवेति
वाच्यम् । द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्राऽव्याप्तिः, अत्र गुणकर्मान्यत्ववैशिष्ट्यं
सामानाधिकरण्यसम्बन्धेन, द्रव्यत्वाभाववति गुणादौ स्वरूपसम्बन्धेन गुणकर्मान्यत्वविशि-
ष्टसत्तादेः समवायेन सत्त्वादिति ध्येयम् ।

एवं स्वरूपसम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तायाः समवायेन साध्यत्वे जातेर्हेतुत्वे स-
द्धेतौ सामानाधिकरण्यसम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तायाः समवायेनाभाववति गुणादौ
हेतोः सत्त्वादव्याप्तिवारणाय साध्याभावघटकप्रतियोगिवैयधिकरण्येऽपि प्रतियोगितावच्छेद-
कताघटकसम्बन्धेन प्रतियोगितावच्छेदकवैशिष्ट्यं बोध्यम् ।

विशिष्टसत्ताभावस्य—गुणकर्मान्यत्वविशिष्टसत्ताभावस्य । अव्याप्तिरेव स्यादिति ।

विशिष्टसत्तादौ नाऽव्याप्तिः, न वा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्त्वादावतिप्रसङ्गः ।

यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धूमत्वव्याप्ये तत्त्वेन साध्ये

---

द्रव्येतराऽसमवेतमात्र वा प्रकृते द्रव्यत्वमिति ध्येयम् ।

हेतुतावच्छेदकरूपेण हेत्वभावप्रतियोगित्वविवक्षायाः फलमाह नवेति । सत्त्वादाविति । द्रव्यत्वादौ साध्ये इत्यनुवर्त्तते ।

यत्रैकव्यक्तिकमिति । तथाच द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः सकलसाध्याऽप्रसिद्धेरित्यर्थः ।

ननु इतोऽप्यस्वरसात्साध्यसामान्याभावस्यैव निवेशितत्वात्साध्ये

---

द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्राऽव्याप्तिः स्यादित्यर्थः । दीधितौ विशिष्टसत्तात्वादिना—गुणकर्मान्यत्वविशिष्टसत्तात्वादिना, तृतीयार्थश्च अवच्छिन्नप्रतियोगिताकत्वं तस्य चाभावेऽन्वयः। अथवा तृतीयार्थोऽवच्छिन्नत्वं तस्य प्रतियोगिपदार्थैकदेशप्रतियोगितायामन्वयः। अतिप्रसङ्ग इति । प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वानिवेशे द्रव्यं सत्त्वादित्यत्राऽतिप्रसङ्ग इत्यर्थः ।

नन्वत्र धूमवान् वह्नेरित्यत्र तादृशवह्निघटोभयाभावप्रतियोगित्वस्य वन्हौ सत्त्वादतिव्याप्तिसम्भवे तत्परित्यागे किं बीजमिति चेन्न । समानाधिकरणयोर्द्वयोः प्रतियोगिनोः सत्त्वात्, व्यधिकरणयोश्चाऽधिकरणाऽप्रसिद्धेरित्ययोगोलकीयवह्नौ तत्प्रतियोगित्वाभावादिति न तत्रातिव्याप्तिः । किञ्च हेत्वभावपदेन हेतुताविशिष्टान्यप्रतियोगिताकाभावस्य विवक्षितत्वात्, हेतुतावैशिष्ट्यं च प्रतियोगितायां स्वाश्रयवृत्तित्व–स्वानाश्रयवृत्तित्वोभयसम्बन्धेन, एवं चोभयाभावस्याऽतथात्वादेकव्यक्तिहेतुकस्थले विशिष्टाभावस्य तथात्वेन तदभिधानादिति ध्येयम् ।

ननु हेत्वभावे हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशेनाऽपि द्रव्यं विशिष्टसत्त्वादित्यत्राऽव्याप्तिवारणसम्भवे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशनमफलम् । न च विनिगमकाभावादेव तन्निवेशितमिति वाच्यम् । द्रव्यं सत्त्वादित्यत्र विशिष्टसत्ताभावस्य हेतुतावच्छेदकसत्तात्वावच्छिन्नवैयधिकरण्याभावेनैवातिप्रसङ्गवारणसम्भवे प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वानिवेशेन लाघवात् इति चेत् । अत्र केचित्—हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्नाऽनधिकरणवृत्तित्वविशिष्टहेत्वभावानिरूपिताऽधिकरणता तन्निरूपकहेत्वभावप्रतियोगित्वं लक्षणवाक्यार्थः पर्यवसन्नः । प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठा हेतुतावच्छेदकावच्छिन्नयादृशप्रतियोगितावच्छेदकावच्छिन्नाऽनधिकरणता तादृशप्रतियोगितावत्त्वरूपो लघुभूतो लक्षणवाक्यार्थः पर्यवस्यतीति तन्निवेशः । न च ममापि सकलसाध्याभाववन्निष्ठं यद्धर्मावच्छिन्नाऽनधिकरणत्वं तद्धर्मवत्त्वमर्थः, स चातिलघुरेवेति वाच्यम् । एतादृशार्थकरणे मूलोक्तं प्रतियोगितायाः व्याप्तित्वं व्याहन्येत इति दीधितिकृता गुर्वर्थानुसरणात्, अस्याऽपि लक्षणान्तरत्वादिति ।

निर्वन्हित्वादौ चाऽव्याप्तिः, तत्र हेत्वभावस्य वन्ह्यादेः प्रत्येकं यावद्विपक्षाऽवृत्तित्वादत आह **साध्यवदिति** ७।

---

**साकल्यं न देयमेवेत्यत आह** विपक्ष इति। **एकव्यक्तिक इत्यनुषज्यते। तथाच यत्रैकव्यक्तिरेव साध्याभाववती तत्र गगनाऽवृत्तिधर्मवान् गगनाऽन्यत्वादित्यादावव्याप्तिः, साध्याभाववतः साकल्याऽप्रसिद्धेरित्यर्थः।**

**ननु साध्यादिभेदेन व्याप्तेर्भेदाद्यत्रैक एव विपक्षस्तत्रत्यलक्षणे साध्याभाववति साकल्यविशेषणं न देयम्, अशेषत्वरूपं वा साकल्यं निवेश्यमतो दोषान्तरमाह** निर्धूमत्वव्याप्य इति। **निर्धूमत्वस्य साध्यत्वे यत्रैकव्यक्तिकमित्यनेनैव गतार्थता स्यादतो व्याप्यपर्यन्तम्। निर्धूमत्वव्याप्यस्यापि स्नेहत्वादिना साध्यत्वे वन्ह्यभावस्य व्यभिचारित्वादसद्धेतुत्वादसङ्ग्रहो न दोषायेत्यत उक्तम्** तत्त्वेन साध्ये इति। **निर्धूमत्वव्याप्यत्वेन साध्ये इत्यर्थः।** प्रत्येकमिति। **तथा च हेत्वभावस्य महानसीयवन्हेः साध्याभाववत्सकलान्तर्गतपर्वताद्यवृत्तित्वादव्याप्तिरिति भावः।**

---

**इत्यनुषज्यते इति।** लिङ्गव्याप्त्यासेनेति शेषः। विपक्षः—निश्चितसाध्याभाववान्। **अशेषत्वरूपमिति।** व्यापकत्वरूपमित्यर्थः, तथाच गगनाऽवृत्तिधर्माभावव्यापकत्वस्य गगनाऽन्यत्वाभावे 'गगनत्वे' सत्त्वान्नोक्ताऽव्याप्तिरिति भावः। **गतार्थता स्यादिति।** तथाच धूमत्वावच्छिन्नाभावरूपस्य निर्धूमत्वस्य साध्यत्वे तस्यैकत्वेन यत्रैकव्यक्तिकमित्यादिनाऽव्याप्तिरभिहितत्वात्पौनरुक्त्यापत्तिरतस्तदपहाय व्याप्य इत्युक्तमिति भावः। इदं तु बोध्यम्। पूर्वं साध्ये साकल्यविशेषणाऽव्याप्तिरुक्ता, इदानीं तु विपक्षो वेत्यस्याऽवतरणोक्तरीत्या साध्ये साकल्यविशेषणाऽप्रवेशाभिप्रायेणाऽव्याप्तिरुच्यते इति प्रक्रमभेदान्न पौनरुक्त्यं किन्तु संयोगेन द्रव्यस्याऽव्याप्यवृत्तिवादिनवीनमते धूमाभावस्याऽव्याप्यवृत्तित्वात्केवलान्वयित्वेन तद्विहाय व्याप्ये इत्युक्तमिति। **तत्त्वेन साध्ये इति।** तथाच धूमत्वावच्छिन्नाभावव्याप्यवान् वह्नित्वावच्छिन्नाभावादित्यत्राऽव्याप्तिरित्यर्थः। दीधितौ आदिना आत्मत्वाभावव्याप्यवान् महत्त्वाभावादित्यत्राऽव्याप्तिः संगृहीता, तत्र हेत्वभावस्य महत्त्वस्य यावदात्मऽवृत्तित्वादिति ध्येयम्।

अथ निर्धूमत्वव्याप्याभाववति सकलान्तर्गतपर्वतचत्वरादौ वन्ह्यभावात्यन्ताभावस्य कस्याऽपि वन्हेरसत्त्वेऽपि वन्ह्यभावभेदस्य सत्त्वात्तमादायैव लक्षणसमन्वयः लक्षणे प्रयोजनविरहेण हेत्वभावप्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्याऽनिवेशात्, हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशेनैवोक्ताऽतिव्याप्तिवारणसम्भवात्। न च लक्षणेऽत्यन्ताभावत्वरूपेण हेत्वभावाऽनिवेशे धूमवान् वन्हेरित्यादौ साध्याभाववति अयोगोलके वन्हिभेदसत्त्वादतिव्याप्तिरिति वाच्यम्। धूमाभाववति वह्न्यादौ वन्हिभेदाऽसत्त्वेनातिव्याप्तिविरहादिति। न च तथापि धूमाभावव्याप्यवान् वन्हिमद्भेदादित्यत्राऽव्याप्तौ ग्रन्थकृतां तात्पर्यम्, अत्र भेदभेदस्याऽनवस्थाभयादधिकरणरूपत्वमेव, तथाच तस्य प्रत्येकं विश्रान्ततया

यावद्विपक्षवृत्तित्वाऽसंभवात्तत्र हेतुभेदमादायापि लक्षणगमनाऽसंभवादिति वाच्यम् । आकाशाऽभावाधिकरणकभेदभेदस्याकाशाभावात्मकाऽधिकरणस्वरूपतया तस्य च यावद्विपक्षवृत्तित्वेन तमादायैव लक्षणसमन्वयात् । नचैवं सति गुणवान् घटभेदादित्यत्र हेतुभेदात्मकाऽऽकाशाभावमादायाऽतिव्याप्तिवारणाय हेत्वभावस्य सकलसाध्याभाववन्निष्ठत्वं हेत्वभावत्वेनैव विवक्षणीयम्, एव चाऽनवस्थाभयाद् घटभेदभेदस्याऽऽकाशाभावरूपत्वेऽपि घटभेदभेदत्वेन गगनाभावः आकाशाभावे एव वर्त्तते न तु गगनाभावाधिकरणे 'हेत्वधिकरणे' घटभेदभेदत्वेनाऽपि गगनाभावस्य केवलान्वयित्वे घटभेदो न घटभेद इति प्रयोगापत्तेः इति नातिव्याप्तिः, एवं चाकाशाभावमादाय नोक्ताव्याप्तिवारणमिति वाच्यम् । उक्तस्थले आकाशाभावस्य हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यविरहेणाऽतिव्याप्त्यनवकाशात् उक्तविवक्षाया अकिञ्चित्करत्वात्, वन्हिमद्भेदहेतुकस्थले साध्याभावाधिकरणस्य हेतुरूपप्रतियोग्यनधिकरणत्वेन हेतुभेदरूपगगनाभावस्य प्रतियोगिव्यधिकरणत्वेनाऽव्याप्तिविरहादिति चेत् । सत्यम् । वन्ह्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यवान् वन्ह्यभावान्यत्वविशिष्टनिर्वन्हित्वादित्यादावव्याप्तिः, तत्र वन्ह्यभावभेदमादाय लक्षणगमनं न संभवति वन्ह्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्याभावयावदन्तःपातिनि वन्ह्यभावे वन्ह्यभावभेदाऽसत्त्वात् वन्ह्यभावात्यन्ताभावमादायापि लक्षणगमनं न संभवति तथाविधयावदन्तःपातिनि पर्वतचत्वरादौ कस्यापि वन्हेर्वन्ह्यभावात्यन्ताभावरूपस्याऽसत्त्वात् ।

न च वन्ह्यभावान्यत्वविशिष्टवन्ह्यभावाभावो न वन्हिस्वरूपः किन्त्वतिरिक्त एव अन्यथा वन्ह्यभावे तादृशविशिष्टाभावबुध्द्यनुदयप्रसंगात्, तथाचाऽखण्डस्य विशिष्टहेत्वभावस्य यावद्विपक्षवृत्तित्वान्नाव्याप्तिरिति वाच्यम् । विशिष्टाभावस्य विशेष्याभावविशेषणाभावानतिरिक्तत्वाङ्गीकर्तृप्राचीनमतावलम्बनेनैतदव्याप्तेरभिधानात्, एवं च प्रतियोगितासंयोगाऽन्यतरसम्बन्धेन वन्हिनैवोपपत्तौ अतिरिक्ताऽभावाऽनभ्युपगमादिति फलितम् तादृशविशिष्टाभावस्य वह्न्यभावत्ववन्ह्युभयरूपत्वेन सकलसाध्याभाववन्निष्ठत्वाऽसभवात् । यदि च हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशेऽपि सकलसाध्याभाववत्पर्वतादौ वह्न्यभावानधिकरणदेशावच्छेदन वह्न्यभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकतादृशवह्न्यभावाभावमादाय नाव्याप्तिरित्युच्यते, तदाऽग्रिमलक्षणाऽपेक्षया गौरवमेवैतल्लक्षणेऽस्वरसो बोध्यः ।

अपरे तु निर्वह्नित्वस्य व्याप्यवृत्तितया तद्धेतुके प्रतियोगिवैयधिकरण्यानुपादानेन प्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्यैव निवेशनीयतया न भेदमादायाऽव्याप्तिवारणाऽसभवः । न चैवं विशिष्टसत्ताहेतुके प्रतियोगितावच्छेदकावच्छिन्नेत्यस्य व्यावृत्तिदानं दीधितिकृतोऽसङ्गतं स्यादिति वाच्यम् । एकोक्त्यभिप्रायेण तदभिधानात् । घटः पटान्यत्वविशिष्टघटपटसंयोगादित्यादावेव पटान्यत्वविशिष्टघटपटसंयोगाभावस्य पटे प्रतियोगिवैयधिकरण्याभावेनाऽव्याप्तिवारणायैव तदुपादानादित्याहुः ।

अन्ये तु हेत्वभावस्य साध्याभाववन्निष्ठत्वं न सम्बन्धसामान्येन, सर्वसाधारणाऽनुगतसम्बन्धत्वाभावाद् गौरवाच्च, नाप्यभावीयविशेषणतया, घटत्वाभाववान् पृथिवीभेदादित्यादौ साध्याभाववति घटे हेत्वभावस्य पृथिवीत्वस्य समवायेनैव सत्त्वादव्याप्तेः, भावाऽभावसाधा-

अत्र निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ तु न दोष इति ध्येयम् ।

---

रणदेशिकविशेषणतायां मानाभावात्, किन्तु हेतुमत्ताग्रहविरोधितानियामकसम्बन्धेन तद्वाच्यम्, युज्यते चैतत्, तथासत्येतद्व्याप्तिज्ञानस्य व्यभिचारधीविरोधित्वं सम्भवति हेतुतावच्छेदके हेतुमत्ताग्रहविरोधितानियामकसम्बन्धेन साध्याभाववन्निष्ठताऽनवच्छेदकत्वग्रहे तुल्यवित्तिवेद्यतया हेतुतावच्छेदकावच्छिन्नाभावस्य तादृशसम्बन्धेन साध्याभाववन्निष्ठत्वग्रहात् साध्याभाववति तादृशसम्बन्धेन हेत्वभावग्रहस्यैव साध्याभाववति हेतुतावच्छेदकसम्बन्धेन हेतुग्रहरूपव्यभिचारग्रहविरोधित्वात्, तथाच वह्न्यभावभेदस्य [illegible]-लिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाभावस्य च तादृशसम्बन्धेन [illegible] भाववन्निष्ठत्वाऽभावात् तमादाय लक्षणगमनाऽसंभवादव्याप्तिर्दुर्वारैवेत्याहुः ।

वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिवैयधिकरण्यं निविष्टं प्रतियोगितायां च 'साध्यतावच्छेदक' हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं निविष्टं, तत्तत्सम्बन्धावच्छिन्नप्रतियोगित्वाऽनिवेशेन लाघवादित्याशयेनोक्ताऽव्याप्त्यभिधानम्, वह्न्यभावभेदादीनां हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वाभावेन तमादाय लक्षणगमनाऽसंभवात् । नन्वेवं सति वृत्त्यनियामकसम्बन्धेन हेतुतायामव्याप्तिः तेन सम्बन्धेन हेत्वभावस्याऽप्रसिद्धेः, तेन सम्बन्धेन प्रतियोगिवैयधिकरण्यन्तु हेत्वभावस्य प्रसिद्धमेवेति चेन्न । प्राचीनमते वृत्त्यनियामकसम्बन्धस्याऽप्यभावप्रतियोगितावच्छेदकत्वात्, वृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगिताऽनवच्छेदकत्वे च तेन सम्बन्धेन व्याप्यत्वस्याप्यनभ्युपगमात् एतल्लक्षणानां च प्राचीनमतानुसारित्वात्, अन्यथाऽभावाऽभावस्याऽतिरिक्तत्वेनैतदव्याप्त्युद्भावनस्यैवाऽसंगतेः ।

केचित्तु धूमवह्न्योः सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकाऽभाव एव विवक्षितः, पर्वतादिवृत्तितादृशवह्न्यभावस्य हेतोस्तादृशसम्बन्धेन धूमवत्त्वेन साध्याभाववत्तया तादृशसकलान्तर्गते तत्र हेतुभेदस्याप्यसत्त्वान्नाव्याप्त्यसङ्गतिरित्याहुः ।

**निरुक्तेति** । प्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः । तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः । **प्रतियोगिवैयधिकरण्येति** । तेन कपिसंयोगी एतत्त्वादित्यादौ नाव्याप्तिः । **साध्याभावव्यापकतावच्छेदकमिति** । साध्याभावव्यापकतावच्छेदकत्वन्तु साध्याभाववन्निष्ठाऽत्यन्ताभावप्रतियोगिताऽनवच्छेदकत्वम्, तेन धूमवान् वन्हेरित्यादौ प्रमेयत्वादिना वह्न्यभावस्य साध्याभावव्यापकत्वेऽपि न क्षतिः, न वा निर्धूमत्वव्याप्यवान् निर्वन्हित्वादित्यादौ निर्वन्हित्वाभावस्य कस्यापि वन्हेः साध्याभावव्यापकत्वविरहेऽप्यव्याप्तिः, वह्न्यभावाभावत्वस्य व्यापकतावच्छेदकत्वात् ।

अथ व्यापकताघटकाभावे साध्याभावसामानाधिकरण्यं यदि यथाकथञ्चित्सम्बन्धेनोच्यते, तदा वह्निमान् धूमादित्यादौ वह्न्यभाववति कालिकसम्बन्धेन धूमादिस्वरूपाभावस्य सत्त्वेन धूमाभावादेर्व्यापकत्वविरहादव्याप्तिः स्यात् । न च साध्याभाववन्निष्ठत्वं हेतुतावच्छेदकसम्बन्धेन विवक्षणीयमिति वाच्यम् । सत्तावान् जातेरित्यादौ साध्याभाववति हेतुतावच्छेदक-

अत्र अन्योऽन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यं, न हि भवति नीलो घटो घटान्य इति ।

---

**ननु साध्यवत्प्रतियोगिकान्यत्वस्य धूमादिमाति सत्त्वादव्याप्तिरत आह** अत्रेति । **तथाच साध्यवत्पदेन निरूढलक्षणयोपस्थापितस्य साध्यतावच्छेदकविशिष्टसाध्यवत्त्वावच्छिन्नप्रतियोगिताकस्याऽन्यपदार्थैकदेशेऽन्यत्वे तादात्म्येनाऽन्वयात् साध्यवति च विशिष्टसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाऽसत्त्वान्नाव्याप्तिः, गुरुधर्मस्याऽवच्छेदकत्वोपगमाच्च द्रव्यं पृथिवीत्वादित्यादौ द्रव्यत्ववत्वविशिष्टद्रव्यत्वावच्छिन्नभेदाऽप्रसिद्ध्या नाऽव्याप्तिरिति भावः ।**

---

सम्बन्धेन वृत्तेरप्रसिद्ध्याऽव्याप्तेरिति चेद्, दत्तोत्तरत्वात् ।

साध्यवत्तद्व्यक्तिभेदमादाय वन्हिमान् धूमादित्यत्राऽव्याप्तिमाशङ्कते **नन्विति** । दीधितौ **अत्रेति** । साध्यवदन्याऽवृत्तित्वमितिवाक्ये इत्यर्थः । घटकत्वं सप्तम्यर्थः । स चान्योन्याभावाऽन्वयी । यद्वा विषयत्वं सप्तम्यर्थः, तच्च व्यापारानुबन्धित्वम्, अन्वयश्चास्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वे । अन्योन्याभावस्य–अन्यपदार्थैकदेशाऽन्योन्याभावस्य । अयमाशयः । सप्रतियोगिकाऽन्योन्याभावातिरिक्तस्य सावधिकपृथक्त्वस्य सत्त्वेपि अन्यपदस्याऽन्योन्याभाववदर्थकत्वमेव, न त्वाचार्यादिसम्मतं पृथक्पदपर्यायत्वं युक्तम्, तथासति घटादन्य इत्यादिवाक्यात् घटाऽन्योन्याभावसंशयनिवृत्तेरनुपपत्तेः । न च घटात्पृथगित्यादौ पञ्चम्युपपत्तये 'अन्यारादितरर्त्ते' इत्यादिसूत्रेणाऽन्यार्थकपदयोगे पञ्चमीविधानेनाऽन्यशब्दस्य पृथक्पदपर्यायत्वमावश्यकमिति वाच्यम् । सूत्रेऽन्यपदस्य पृथगादिपदोपलक्षकत्वेनैव तदुपपत्तेः।

केचित्तु यदि अन्यादिपदस्याऽन्योन्याभाववदर्थकत्वं न स्यात्, न स्याद्वा तद्योगे पञ्चमी पृथक्त्वगुणविशिष्टबोधकाऽन्यादिपदयोगे पञ्चम्या 'ध्रुवमपायेऽपादानमि'ति सूत्रेणैव सिद्धत्वादित्याहुः ।

अपरे तु गुणादौ पृथक्त्वगुणाऽसम्भवेन द्रव्यादन्यो गुण इत्यादि प्रयोगानुपपत्त्याऽन्योन्याभावस्यैवाऽन्यपदार्थतावच्छेदकत्वमित्याहुः ।

वस्तुतस्तु **गुणदीधितौ** अन्योन्याभावातिरिक्तपृथक्त्वस्य निरासेन अन्यपदस्य पृथक्पदपर्यायत्वेऽपि अन्योन्याऽभाववदर्थकत्वमेव ।

व्युत्पत्तिः आकाङ्क्षा–अन्यादिपदसमभिव्याहारः । तदेवं बलं–प्रयोजकं–तल्लभ्यं–तत्प्रयोज्यशाब्दबोधविषय इत्यर्थः। नञ्पदसमभिव्याहारज्ञानस्येवाऽन्यादिपदसमभिव्याहारज्ञानस्यापि अन्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावशाब्दत्वावच्छिन्नं प्रति हेतुत्वादिति भावः ।

जागदीश्यां **निरूढलक्षणयेति** । न च साध्यवत्त्वावच्छिन्नप्रतियोगिताकस्य लक्षणया पदलभ्यत्वे पदार्थतया पदार्थे व्युत्पत्तिबललभ्यत्वोक्तिरसङ्गतेति वाच्यम् । विग्रहसमासयोस्तुल्यार्थकत्वनियमेन विग्रहात्तथा बोधस्य व्युत्पन्नत्वे समासादपि तथात्वेन विग्रहीयव्युत्पत्तेस्तल्लक्षणायां प्रयोजकतया तल्लभ्यत्वोक्तेः । अत एवोपष्टम्भके घटान्य इति समस्तमुपेक्ष्य घटादन्य इति विग्रहवाक्यमेवोक्तम् ।

किञ्च प्रकृते निरूढलक्षणायाः समभिव्याहारविशेषव्युत्पत्तिनियन्त्रितत्वमस्मदुक्तिः, नहि साध्यवदादिपदमात्रे साध्यवत्त्वावच्छिन्नप्रतियोगिताके निरूढलक्षणा किन्तु अन्या-दिपदसमभिव्याहृते तत्रेत्याशयः । उपष्टम्भके समस्तं चेह वाऽसमस्तेऽपि समस्तवा-क्येऽप्यन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युत्पत्तिबललभ्यतया विग्रहसमासवा-क्ययोः समानार्थकत्वनियमभङ्गो नेति सूचनाय ।

केचित्तु साध्यवदन्येत्यादिसमस्तस्थलेऽपि न लक्षणा किन्तु विग्रहवाक्यस्थपञ्चमीक-स्मरणेन तथाऽन्वयः । यद्वा समासस्थले व्युत्पत्तिवैचित्र्यात् नामार्थयोर्भेदान्वयोऽभ्युपगमेन साध्यवदादेरन्यपदार्थे भेदे निरुक्तप्रतियोगिताकत्वसम्बन्धेनाऽन्वयः, एवं च तस्याऽपदार्थ-त्वेन व्युत्पत्तिबललभ्यत्वोक्तिरपि समञ्जसैवेत्याहुः ।

ननु तथापि अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वाऽलाभः, तथाहि यथा नञ्-समभिव्याहारज्ञानकार्यतावच्छेदककोटिप्रविष्टान्वयितावच्छेदकत्वं नञर्थाऽभावविशेष्यतानि-रूपितप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यधिकरणत्वं, तथाऽन्यादिपदस-मभिव्याहारज्ञानकार्यतावच्छेदककोटिप्रविष्टमन्यपदार्थैकदेशाऽन्योन्याभावविशेष्यतानिरूपित-प्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यधिकरणत्वमेव वाच्यम्, तस्य च साध्यवतो इत्याद्यसमस्तस्थले विभक्त्यर्थप्रतियोगित्वस्य प्रकारतया संसर्गतया वा भानाभ्यु-पगमसंभवेपि समस्तस्थले प्रतियोगित्वस्याऽसंसर्गतया न सम्भव इति चेत् । मैवम् । साक्षात्प-रम्परया वा तादृशान्योन्याभावान्वितप्रतियोगितायां प्रकारतावच्छेदकत्वमेवोभयसाधारणं प्रकृतेऽन्वयितावच्छेदकत्वम् । असमस्तस्थले साक्षादन्योन्याभावान्वितविभक्त्यर्थप्रति-योगितायां साध्यवत्त्वाद्यवच्छिन्नत्वसम्बन्धेन साध्यवदादेः प्रकारतया साध्यवदादेस्तदवच्छे-दकत्वम् । समस्तस्थले तु साध्यवदादिपदस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताके लाक्षणिकतया परम्परयाऽन्योन्याभावान्वितप्रतियोगितायामवच्छिन्नत्वस्य प्रकारतया साध्यवत्त्वादेस्तदव-च्छेदकत्वम् ।

केचित्तु असमस्तस्थले तादृशभेदनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारता-वच्छेदकत्वं तत्, एव च तद्धर्मावच्छिन्नप्रतियोगिप्रकारतानिरूपितप्रतियोगित्वप्रकारता-निरूपितभेदविशेष्यताकशाब्दं प्रति तद्धर्मावच्छिन्नबोधकपदसमभिव्याहृतपञ्चम्यन्तपद-समभिव्याहृतान्यपदज्ञानत्वेन हेतुत्वमेकं, तद्धर्मावच्छिन्नत्वप्रकारतानिरूपितप्रतियोगि-त्वप्रकारतानिरूपिताश्रयत्वप्रकारतानिरूपितभेदविशेष्यताकशाब्दं प्रति तद्धर्मावच्छिन्न-बोधकपदसमभिव्याहृताऽन्यपदज्ञानत्वेन चाऽपरमित्याहुः । तदसत् । उक्तरीत्यैव सामं-जस्ये धर्मभेदेन समस्ताऽसमस्ते हेतुत्वद्वयकल्पने गौरवात् । न च भवन्मतेऽपि कथमे-कहेतुत्वम् ? असमस्तस्थले प्रतियोगित्वस्य समस्तस्थले चाऽऽश्रयस्य प्रकारत्वात्, प्रमेया-दिपदजन्यप्रमेयत्वादिप्रकारकवस्तुसत्तादृशभेदबोधे व्यभिचारेण जन्यतायां प्रकारतावि-शेषनिवेशस्याऽवश्यकत्वादिति वाच्यम् । तादृशभेदविशेष्यतानिरूपितसाक्षात्परंपरासाधार-णोक्तप्रतियोगित्वप्रकारताया एव जन्यतावच्छेदकत्वात् ।

अपरे तु प्रतियोगित्वविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नत्वसम्बन्धावच्छिन्नप्रकार-तावच्छेदकत्वमेवोभयसाधारणं प्रकृतेऽन्वयितावच्छेदकत्वम्, तद्धर्मावच्छिन्नत्वसम्बन्धाव-

तद्धर्मविशिष्टबोधकपदसमभिव्याहृतेनाऽन्यादिपदेनोऽपस्थापितेऽन्यत्वादौ तद्धर्मावच्छिन्नप्रतियोगिताकत्वप्रकारेणैव तादात्म्येनाऽन्वयो न तु-

च्छिन्नप्रतियोगिप्रकारतानिरूपितप्रतियोगित्वप्रकारतैव जन्यतावच्छेदिका असमस्तस्थले विभक्त्यर्थप्रतियोगितायां साध्यवत्त्वावच्छिन्नत्वसम्बन्धेन साध्यवदादेरन्वयः। समस्तस्थले तु साध्यवदादिपदस्य लक्षणया साध्यवत्त्वाद्यवच्छिन्नप्रतियोगिताको नार्थः, किन्तु प्रतियोगिताकमात्रं तत्र शक्यार्थसाध्यवदादेः साध्यवत्त्वाद्यवच्छिन्नत्वसम्बन्धेन प्रतियोगितायामन्वयः एकनामार्थेऽपरनामार्थस्य भेदेनाऽन्वयस्याऽव्युत्पन्नत्वेपि एकनामार्थयोः परस्परं भेदेनाऽन्वये कृतिवर्त्तमानत्वयोरिव बाधकाभावात् दित्याहुः।

वस्तुतस्तु तादृशभेदनिरूपितोक्तप्रतियोगिविषयतैव जन्यतावच्छेदिका सा चाऽसमस्तस्थले प्रकारता संसर्गता च, समस्तस्थले ससर्गतैव आश्रयस्याऽभेदसम्बन्धेन प्रकारतयाऽभेदस्य प्रतियोगितावच्छेदकात्मकभेदाऽभावरूपतया नीलो घट इत्यादौ नीलत्वादाविव प्रकृते तूक्तप्रतियोगित्व एव पर्यवसानात्।

**साध्यतावच्छेदकविशिष्टसाध्यवत्त्वावच्छिन्नप्रतियोगिताकस्येति**। साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मनिष्ठाऽवच्छेदतानिरूपकीभूतसाध्यवत्त्वपर्याप्तावच्छेदकताकप्रतियोगिताकस्येत्यर्थः। तेन तत्तद्वह्निमान्न वह्निघटोभयवान्न वह्निमत्पर्वतो नेत्यादिभेदानां महानसादौ सत्त्वेऽपि न क्षतिः।

महानसयिवह्न्याद्यवच्छिन्नप्रतियोगिताकभेदमादायाऽव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्याऽवश्य विवक्षणीयतया प्रसक्तां द्रव्यं पृथिवीत्वादित्यत्राऽव्याप्तिं निराकुरुते **गुरुधर्मस्याऽवच्छेदकत्वोपगमाच्चेति। नाव्याप्तिरिति**। इदमुपलक्षणम् कंबुग्रीवादिमत्ववान् घटत्वादित्यादिगुरुधर्मसाध्यके साध्यावच्छिन्नप्रतियोगित्वस्याऽप्यप्रसिद्धिर्द्रष्टव्या।

केचित्तु ननु साध्यवदन्य इत्यत्र मतुबन्तप्रतिपाद्यतावच्छेदकसाध्यसम्बन्धरूपसाध्यवत्त्वस्याऽन्वयितावच्छेदकत्वेऽपि साध्यापेक्षया गुरुतयाऽभावप्रतियोगिताऽनवच्छेदकत्वेन तदवच्छिन्नप्रतियोगित्वाऽप्रसिद्धिः। न च पटः कम्बुग्रीवादिमदन्य इत्यादिवाक्यप्रामाण्यानुरोधेनाऽन्वयितावच्छेदकनिरूपितं पारिभाषिकमवच्छिन्नत्वं प्रतियोगितायां भासते इति, गुरुधर्मोऽपि प्रतियोगिताऽवच्छेदक इति वोपेयमिति न दोष इति वाच्यम्। कम्बुग्रीवादिमान्नास्तीत्यादौ भ्रमात्यकशाब्दबोध इत्युत्तरविरोधादिति चेन्न। साध्यवत्त्वं हि अत्र साध्यमेव विवक्षित मतुबन्तप्रतिपाद्यतावच्छेदकत्वस्य मतुबन्तजन्यबोधे संप्रदायमते मतुबर्थसम्बन्धस्येव तद्वारा मत्युप्प्रकृत्यर्थस्याऽपि प्रकारत्वामित्याशयात्। न च कम्बुग्रीवादिमत्त्ववान् घटत्वादित्यत्राऽव्याप्तिरिति वाच्यम्। तत्र भ्रमात्मकव्याप्तिज्ञानादेवाऽनुमित्यङ्गीकारादिति प्राहुः।

वस्तुतस्तु अन्योन्याभावप्रतियोगिताऽनवच्छेदकत्वे सति वृत्तिमत्त्वरूपकेवलान्वयित्वस्य गुरुधर्मसाधारण्येन तत्साध्यकाऽव्याप्तेर्मूलोक्तदोषे एवाऽन्तर्भाव इति ध्येयम्।

साध्यवत्पदार्थस्य "साध्यावच्छिन्नप्रतियोगिताकस्य" नान्यपदार्थेऽन्वयः, बाधात्, नापि तदेकदेशे पदार्थः पदार्थेनान्वेतीत्यादिव्युत्पत्तिविरोधादत आह **अन्यत्वादाविति**।

तद्धर्माश्रयप्रतियोगिताकत्वेनेत्यत्र व्युत्पत्तौ प्रमाणमाह नहीति । तादृशव्युत्पत्त्यस्वीकारे नीलघटे पीतघटप्रतियोगिकभेदसत्त्वान्नीलो घटो घटान्य इत्यपि व्यवहारः स्यादिति भावः ।

अत्र च द्रव्यं घटान्यदित्याद्यप्रयोगात् यन्निष्ठप्रतियोगिताकत्वेनाऽन्यादिपदेन भेदो बोध्यते तदवृत्तिधर्मस्यैवाऽनुयोगितावच्छेदकत्वात् तत एव घटो घटान्य इत्यस्य वारणसम्भवात् नीलघटत्वस्याऽनुयोगितावच्छेदकत्वपर्यन्ताऽनुधावनमिति मन्तव्यम् ।

तादात्म्येनाऽन्वय इति । व्युत्पत्तिवैचित्र्यादिति शेषः । उत्तरपदस्यैव विशिष्ट लक्षणं, इतरं तात्पर्यग्राहकं, एवं च न कश्चिद्विरोध इत्यपि कश्चित् ।

तद्धर्मावच्छिन्नप्रतियोगिताकत्वप्रकारेणैवेति । एवकारव्यवच्छेद्यमाह नत्विति । एतेन पर्याप्तिनिवेशनमपि सूचितम् ।

नन्वेवमभेदसम्बन्धेन साध्यावच्छिन्नप्रतियोगिताकविशिष्टभेदवदवृत्तित्वमेव लक्षणं पर्यवसन्नं, लक्षणवाक्याद् यादृशविशिष्टार्थः प्रतीयते तस्यैव लक्षणत्वात्, एवं च अनुमितिहेतुतावच्छेदकव्याप्तिजिज्ञासया एतन्निरूपणेऽर्थान्तरं, लाघवादुक्तप्रतियोगितासंसर्गकसाध्यवद्विशेषणकभेदघटितव्याप्तेरेवाऽनुमितिहेतुतावच्छेदकत्वादिति चेन्न । लक्षणवाक्यतात्पर्यप्रयुक्तबोधविषयविशिष्टार्थस्यैव लक्षणत्वेन यादृशव्याप्तिज्ञानमनुमितिहेतुस्तस्यामेवाऽस्य तात्पर्येण तादृशव्याप्तिज्ञानतात्पर्यप्रयुक्तप्रकृतलक्षणवाक्यादपि तादृशमानसबोधसम्भवेन तादृशव्याप्तेरेव लक्षणार्थत्वात् ।

वस्तुतस्तु लक्षणवाक्यार्थस्यैव लक्षणत्वेऽपि नार्थान्तरं, शरीरगौरवेऽपि तदर्थव्याप्तेरत्र लाघवान्तरेणाऽनुमितिहेतुतावच्छेदकत्वात्, लाघवान्तरं च अवच्छिन्नत्वं न साध्यीयं, प्रतियोगिता नावच्छिन्ना, भेदो नोक्तप्रतियोगिताक इत्यादि बहुविधोपनीतभानादौ अनुमितिसामग्र्याः प्रतिबन्धकत्वाकल्पनेन । अत एव सिद्धान्ते व्यापकसामानाधिकरण्यरूपव्याप्तेरप्यनुमितिहेतुतावच्छेदकत्वं वक्ष्यमाणमुपपद्यते, अन्यथा तत्रापि शरीरलाघवेन स्वावच्छिन्नव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यसम्बन्धेन हेतुतावच्छेदकवत्त्वस्यैव व्याप्तित्वौचित्यादिति तत्त्वम् ।

अत्र चेति । तत एवेति । अन्यादिपदसमभिव्याहारज्ञानस्याऽनुयोगितावच्छेदकावच्छेदेन अन्योन्याभावादिशाब्दं प्रति हेतुत्वम्, तथा अनुयोगितावच्छेदकश्च प्रतियोग्यवृत्तिधर्म इति व्युत्पत्त्यनुरोधादेवेत्यर्थः ।

वस्तुतस्तु द्रव्यं घटान्यदित्यादिप्रयोगवारणाय अन्यादिपदसमभिव्याहारज्ञानं अनुयोगितावच्छेदकाऽधिकरणाऽवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावशाब्दं प्रति कारणमेतादृशरीत्यैव कार्यकारणभावः कल्प्यते तावतापि द्रव्यं घटान्यदित्यादिप्रयोगवारणसम्भवात्, न तूक्तरीत्या कार्यकारणभावः कल्प्यते, एवं च द्रव्यं घटान्यदित्यादिप्रयोगस्य यथा वारणं तथैव घटो घटान्य इत्यादि प्रयोगस्यापि वारणसम्भवोऽत उक्तं नीलो घटो घटान्य इति । एतेनाऽन्यादिपदसमभिव्याहारज्ञानस्याऽनुयोगितावच्छेदकावच्छेदेनाऽन्योन्याभावबोधकत्वेऽपि घटप्रतियोगिकस्य घटपटोभयान्योन्याभावस्य घटत्वावच्छेदेन सम्भवात्तादृशाभावमादाय घटे

नीलो घटो घटान्य इत्येव सम्यक् पाठः, तथैव प्रकृतोपयोगित्वस ङ्गतेः। घटादन्य इति पाठस्तु साध्यवदन्येत्यत्र पञ्चमीसमासे लुप्तविभक्तिस्मारितप्रतियोगित्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वस्य संसर्गमर्यादया भानमादृत्य कथञ्चित्सङ्गमनीयः ।

घटः पटो नेत्यादौ तु पटपदं मुख्यार्थपरमेव न तु प्रकृत इव पटत्वावच्छिन्नप्रतियोगिताकपरम्, निपाताऽतिरिक्तस्थले एव नामार्थयोर्भेदान्वयस्याऽव्युत्पन्नतया नञोपस्थापिते भेदे पटत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेणैव पटस्याऽन्वयसम्भवात् । पटत्वावच्छिन्नप्रतियोगिताकत्वन्तु पटत्वमवच्छिन्नत्वं प्रतियोगित्वं चेति त्रितयमेव विशेष्यविशेषणभावापन्नं संसर्गः, न तु वस्तुगत्या पटत्वाऽवच्छिन्नं यत्प्रतियोगित्वं तन्मात्रम्, पटो नेत्यत्र पटत्वावच्छिन्नत्वस्याप्यनुभवसिद्धत्वात्, अन्यथा प्रतियोगिव्यक्तिभिरेव तत्तद्विशिष्टबुद्ध्युपपत्तौ पटत्वादेस्तदवच्छेदकत्वमेव न स्यात्, मानाभावात्, अत एव केवलान्वयिग्रन्थे वन्हिर्नास्तीत्यत्र वन्हित्वं

---

घटान्य इति प्रयोगवारणाऽसम्भवेन नीलघटोपादानं व्यर्थमिति परास्तम् ।

ननु नीलघटत्वस्य कथं प्रतियोग्यवृत्तित्वमिति चेत् । विशिष्टसत्तावान् गुणान्य इति प्रयोगाऽनुरोधेन यद्धर्मावच्छिन्नवत्त्व प्रतियोग्यवृत्ति यद्धर्मो वा प्रतियोगिवृत्तिताऽनवच्छेदकः तद्धर्मावच्छिन्नमेव भेदानुयोगितावच्छेदकमिति न कोपि दोषः । नीलघटत्वावच्छिन्नवत्त्वं च घटाऽवृत्तीति ।

**प्रकृतोपयोगित्वसङ्गतेरिति** । अत्रापि साध्यवत्त्वावच्छिन्नप्रतियोगिताक इव घटत्वावच्छिन्नप्रतियोगिताके लक्षणा । तथाच दृष्टान्तदार्ष्टान्तयोः साम्यमिति भावः ।

**घटादन्य इतीति** । अत्र प्राचीनमते पञ्चम्याः प्रतियोगित्वमर्थः । तत्र घटत्वावच्छिन्नस्याऽधेयतासम्बन्धेनाऽन्वयः । धर्मिपारतन्त्र्येण घटत्वादेरपि अवच्छिन्नत्वसम्बन्धेन तत्राऽन्वयात्, एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र धर्मिपारतन्त्र्येणान्वयस्य सर्वमतसिद्धत्वात्, प्रतियोगित्वस्य व्युत्पत्तिवैचित्र्येणाऽन्यपदार्थैकदेशे भेदे निरूपकतासम्बन्धेनाऽन्वयः ।

न घटादित्यादौ यदि पञ्चम्याः प्रतियोगित्वमर्थस्तदा घटनिष्ठप्रतियोगिताया निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावो बोधविषयो वाच्यः, एवं च निरूपकत्वस्य वृत्त्यनियामकतया तादृशाऽभावाऽप्रसिद्ध्या न सम्भवतीति नवीनैरनुयोगित्वमेव पञ्चम्यर्थः स्वीक्रियते, तत्र प्रकृत्यर्थस्य घटादेः स्ववृत्तिघटत्वावच्छिन्नप्रतियोगितानिरूपकताकत्वसम्बन्धेनाऽन्वयः । अनुयोगितायाश्चाऽऽश्रयतासम्बन्धेनाऽन्वयः । समासस्थले च उभयमते घटपदस्य घटत्वावच्छिन्नप्रतियोगिताविशिष्टे अनुयोगिताविशिष्टे वा लक्षणा, तत्पुरुषे पूर्वपदस्य तत्तद्विभक्त्यन्तार्थविशिष्टे लाक्षणिकत्वात् ।

यत्किञ्चित्पटादिव्यक्तौ पटो नेत्याद्यप्रयोगेण नञ्स्थलेप्यन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्व व्युत्पत्तिबललभ्यं तत्प्रसङ्गादुपपादयति **घटः पटो नेत्यादौ त्विति** । मुख्यार्थपरमेव–पटत्वावच्छिन्नपरमेव । **अव्युत्पन्नतयेति** । राजा पुरुषः भूतलं घट इत्यादौ क्रमेण स्वत्वाऽधेयतासम्बन्धेन राजभूतलादेः पुरुषघटादावन्वयाऽबोधाद्विशेष्यतासम्बन्धेन तादात्म्यसम्बन्धानवच्छिन्ननामार्थनिष्ठप्रकारताशालिबोधं प्रति नामोत्तरविभक्त्युपस्थाप्यत्वस्य

अवच्छिन्नत्वं प्रतियोगित्वं च संसर्गमर्यादया भासते इति स्वयमप्युक्तम् ।

इत्थं च प्रमेयं नास्ति कम्बुग्रीवादिमान्नास्तीत्यादिशाब्दबोधानां संसर्गकोटावेव प्रतियोगितायां प्रमेयत्वावच्छिन्नत्वावगाहितया भ्रमत्वम्, संसर्गप्रकारसाधारणविशेषणविशेष्यभावस्यैव भ्रमत्वघटकत्वात्, अन्यथा स्वरूपसम्बन्धेन प्रमेयत्वाद्यवच्छिन्नप्रतियोगित्वस्याऽलीकतयाऽखण्डतत्सम्बन्धेन प्रमेयस्य अभावे धर्मिणि अन्वयाऽसम्भवेन भ्रमत्वाऽनुपपत्तेः, सदुपरागेणाऽप्यसतः संसर्गमर्यादया भानस्य मणिकृताऽनङ्गीकारात् ।

कलसेन पटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन चाऽभावे प्रमेयस्य सत्त्वेन तादृशसम्बन्धेन भ्रमत्वस्य वक्तुमशक्यत्वात् । पटत्वादेरन्वयिता-

---

निपातोपस्थाप्यत्वस्य च प्रयोजकतयेति भावः । **संसर्गेणैवेति** । तथाच पटत्वावच्छिन्नप्रतियोगिताकत्वं सम्बन्धविधया भासते न तु लक्षणावच्छेदकतयेति भावः । निपाताऽतिरिक्तनामार्थयोरेव भेदाऽन्वयस्याऽव्युत्पन्नतया नञर्थे घटादेरुक्तसम्बन्धेनाऽन्वयसम्भवादिति ।

**इत्थं चेति** । विशेषणविशेष्यभावापन्नस्य संसर्गत्वे चेत्यर्थः । इदन्तु तत्त्वम् । यत्राऽन्वयितावच्छेदकावच्छिन्नस्य प्रतियोगित्वं प्रसिद्धं तत्राऽन्वयितावच्छेदकावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नतादृशप्रकारताया एव तादृशसमभिव्याहारज्ञानकार्यतावच्छेदकत्वं, कम्बुग्रीवादिमान्नास्तीत्यादौ तु नञ्पदसमभिव्याहारज्ञानकार्यतावच्छेदकं न कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नतथाविधप्रकारताशालित्वं गुरुधर्मे अभावप्रतियोगितावच्छेदकताविरहेण कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताया अप्रसिद्धत्वेन तथा वक्तुमशक्यत्वात्, किन्तु तत्र कम्बुग्रीवादिमत्त्वनिष्ठसांसर्गिकविषयतानिरूपितअवच्छेदकत्वनिष्ठसांसर्गिकविषयतानिरूपितनिरूपितत्वनिष्ठसांसर्गिकविषयतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयताया एव तत्त्वं, तथा च तादृशवाक्यजन्यबोधेऽवच्छेदकत्वांशे कम्बुग्रीवादिमत्त्वस्य भ्रमत्वस्वीकारान्नानुपपत्तिरिति ।

ननु भ्रमत्वं हि तदभाववति तत्प्रकारकत्वम्, तथाच सांसर्गिकविषयतायां प्रकारतात्वविशेष्यतात्वाभावेन सम्बन्धांशे भ्रमत्वं दुरुपपन्नम्, न च तदाभाववन्निष्ठविषयतानिरूपिततन्निष्ठविषयताशालित्वमेव भ्रमत्वमिति वाच्यम्, तथासति इदं रजतमिति ज्ञाने इदमंशेपि भ्रमत्वापत्तेरिति चेन्न । सांसर्गिकविषयतायां प्रकारतात्वव्यापकविशेषणतात्वाङ्गीकारात् । तदेवाह-**संसर्गप्रकारसाधारणेति** । नचैवं सति अवच्छेदकत्वे कम्बुग्रीवादिमत्त्वाभावनिर्णयदशायां कम्बुग्रीवादिमान्नास्तीति प्रतीत्यनुपपत्तिः, भवन्मते तस्याः तादृशबाधप्रतिबध्यतावच्छेदकाक्रान्तत्वादिति वाच्यम् । इष्टापत्तेः । बाधप्रतिबध्यतावच्छेदककोटौ प्रकारतायां सांसर्गिकविषयताभिन्नत्वस्य वा निवेशात् ।

ननु कम्बुग्रीवादिमान्नास्तीत्यादौ अभावांशे घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन कम्बुग्रीवादिमत्त्वावच्छिन्नस्य भानमुपेयते, तथाचेयं प्रतीतिर्भ्रमात्मिका घटत्वावच्छिन्नप्रतियोगितायाः कम्बुग्रीवादिमत्त्वविशिष्टस्य सम्बन्धत्वाभावेन तत्सम्बन्धेन तदभाववति अभावे तत्प्रकारत्वादित्यत आह **कलसेनेति** । प्रमेयस्य-पटात्मकप्रमेयस्य ।

**तादृशप्रयोगापलापापत्तेरिति** । तथाचाऽन्वयितावच्छेदकतापर्याप्त्यधिकरणध-

ऽनवच्छेदकतया तदवच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वादिविशिष्टस्याऽन्वये निराकाङ्क्षत्वाच्च, अन्यथा घटवत्यपि घटो नास्तीत्यादेः प्रमाणत्वापत्तेः, तत्तद्घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन घटविशिष्टस्य घटविशेषाभावस्य तत्र सत्त्वात् ।

एतेन सत्तासमवायिन्यपि गुणादौ विशिष्टसत्तात्वावच्छिन्नस्य समवायेनाऽसत्त्ववत् घटत्वावच्छिन्नवतोऽपि घटाद्यभावस्य न तादृशसम्बन्धेन प्रमेयत्वावच्छिन्नवत्त्वम्, अतः प्रमेयं नास्तीत्यादौ घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वावच्छिन्नस्यैवाऽभावांशे भ्रमत्वमित्यपि प्रत्युक्तम् । घटत्वादेरन्वयिताऽनवच्छेदकतया तदवच्छिन्नप्रतियोगितासम्बन्धेन प्रमेयत्वविशिष्टस्याऽन्वये निराकाङ्क्षतया तथाशाब्दस्याऽसम्भवादिति ध्येयम् ।

नीलो घटो नास्तीत्यादौ तु नीलघटत्वस्याऽन्वयितावच्छेदकत्वे तादृशधर्मावच्छिन्नप्रतियोगित्वमेव संसर्गः, न तु नीलत्वघटत्वादिप्रत्येकधर्मावच्छिन्नप्रतियोगित्वम्, नीलपटस्य पीतघटस्य वाऽधिकरणे तादृशप्रयोगाऽपलापत्तेः । नीलोपलक्षितस्य घटत्वमात्रस्याऽन्वयितावच्छेदकत्वे तु घटत्वावच्छिन्नप्रतियोगित्वमेव तथा ।

संयोगेन घटो नास्तीत्यादौ तु तृतीयाविभक्तेरवच्छिन्नत्वमर्थः, संसर्गीभूतप्रतियोगितायां तदन्वयाऽसम्भवात्, किन्त्ववच्छिन्नप्रतियोगिताकत्वं, प्रतियोगित्वमात्रं वा, अवच्छिन्नत्वसंसर्गेण संयोगादेस्तत्राऽन्वयादेव विशिष्टलाभसम्भवात् । न चैवं संयोगेन घटाभावस्यैव समवायेन घटविशिष्टद्रव्यत्वाभावतया समवायेन कपाले घटो नास्तीति व्यवहारापत्तिः, तृतीयान्तसमभिव्याहारस्थले तदुपस्थाप्यप्रतियोगित्वस्यैव संसर्गतया व्युत्पन्नत्वात्, समवायावच्छिन्नघटप्रतियोगिताकाभावस्य च कपाले विरहात् ।

अस्तु वा घटत्वावच्छिन्नत्वस्येव संयोगसम्बन्धावच्छिन्नत्वस्यापि प्रतियोगित्वांशे संसर्गमर्यादयैव भानम्, तृतीयान्तसमभिव्याहारस्य नियामकत्वाच्च नातिप्रसङ्गः ।

---

र्मावच्छिन्नप्रतियोगितासम्बन्धेनाऽभावांशे प्रतियोगिनो भानमित्यर्थः । ननु नीलो घटो नास्तीत्यादौ नीलघटत्वावच्छिन्नप्रतियोगितासम्बन्धेन नीलघटं विषयीकृत्य शाब्दबोधस्तु न सम्भवति अत्राऽन्वयितावच्छेदकीभूतं यदभेदसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन नीलविशिष्ट घटत्वं तस्य समवायघटितसामानाधिकरण्यसम्बन्धेन नीलरूपविशिष्टं यद् घटत्व तदपेक्षया गुरुतयाऽभावप्रतियोगिताऽनवच्छेदकत्वेन तदवच्छिन्नप्रतियोगिताया अप्रसिद्धत्वेन तेन सम्बन्धेन तत्र नीलघटभानस्याऽसम्भवादिति चेत् । न, कम्बुग्रीवादिमान्नास्तीत्यादाविवोपदर्शितरीत्याऽत्रापि बोधसम्भवेवाऽनुपपत्त्यभावात् । घटपदस्य नीलरूपविशिष्टघटत्वावच्छिन्ने लक्षणा, अन्यथाऽप्रामाण्यस्येष्टत्वादित्यपि केचित् ।

ननु कम्बुग्रीवादिमान्नास्ति नीलघटो नास्ति इत्यादौ कम्बुग्रीवादिमत्त्वव्यापकघटत्वाव-

घटाऽनधिकरणं भूतलमित्यादौ तु लक्षणयाऽधिकरणपदमेव घटाधिकरणार्थकम्, घटपदं तात्पर्यग्राहकम्, अन्यथाऽनधिकरणपदेनाऽधिकरणसामान्यभिन्नान्वोक्तौ भूतले तस्य बाधः स्यात्। न च घटान्वितस्यैवाऽधिकरणस्य भेदस्तत्र नञा बोधनीयः, समासान्तर्गतनञामुत्तरपदार्थमात्रान्वयित्वव्युत्पत्तेः, अन्यथा नीलाऽघटो घट इत्यादौ नीलघटान्यस्य घटत्वं नीलाऽप्रमेयः पट इत्यादौ च नीलप्रमेयान्यस्य पटत्वं प्रतीयेत।

वस्तुतः ससम्बन्धिकपदस्थले व्युत्पत्तिवैचित्र्यात्प्रतियोगिताऽनवच्छेदकं घटाऽनधिकरणं भूतलमित्यादौ घटाद्यन्वितस्यैवाऽधिकरणादेर्भेदो भासते, अन्यत्र त्रिपदतत्पुरुषाऽनुपगमेऽपि घटस्य नाऽधिकरणं प्रतियोगिताया नाऽवच्छेदकमित्यादिरीत्या त्रिपदतत्पुरुषेण विशिष्टलाभसम्भवादिति तु परमार्थः।

पीतः शङ्खो नास्तीत्यादौ शाब्दबोधस्तु न शङ्खत्वावच्छिन्नतया प्रतियोगित्वमवगाहते तन्मात्रस्याऽन्वयिनाऽनवच्छेदकत्वात् शङ्खवत्तया निश्चिते धर्मिण्यपि तादृशप्रयोगात्, परन्तु पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेन संसर्गमर्यादया प्रतियोगित्वमवगाहते, नञादिपदानां यद्धर्मविशिष्टवैशिष्ट्यावगाहिस्वोपस्थाप्याभावधर्मिकाऽन्वयबोधजनकत्वं तद्धर्मावच्छिन्नप्रतियोगितात्वेन प्रतियोगितासंसर्गकाऽन्वयबोधजनकत्वव्युत्पत्तेः।

इयांस्तु विशेषः। यद् घटो नास्तीत्यादिशाब्दबोधे सांसर्गिकी प्रतियोगित्वावगाहिता प्रसिद्धेन घटत्वावच्छिन्नप्रतियोगितात्वेन निरूपिता, पीतः शङ्खो नास्तीत्यादौ तु पीतशङ्खत्वावच्छिन्नप्रतियोगितात्वेनाऽप्रसिद्धेनेवेत्यादिकं बहुतरमूहनीयम्।

इति जागदीशी पञ्चलक्षणी सम्पूर्णा।

---

च्छिन्नप्रतियोगिताकत्वं सम्बन्ध इति प्रामाण्यं सुघटम्। नचैवं द्रव्ये सत्ता नास्तीत्यादिवाक्यं योग्यं स्यात् द्रव्यान्यत्वविशिष्टसत्तात्वादेरपि सत्तात्वव्यापकत्वादिति वाच्यम्। व्यापकत्वपदेनात्र समव्यापकत्वनिवेशात्। नचैवं गौरवमिति वाच्यम्। समव्यापकतावच्छेदकत्वेनोपलक्षिततत्तद्धर्माऽनुगमात् तद्धर्मावच्छिन्नप्रतियोगिताकत्वसंसर्गकबुद्धित्वस्यैव तत्तदानुपूर्वीज्ञानजन्यतावच्छेदकत्वादिति केषा चिन्मतं निराकरोति **पीतः शङ्खो नास्तीति**। तथाच शङ्खो न पीत इति विशेषदर्शिनामपार्थकत्वमेव, तददर्शिनां वाच्य नास्तीत्यादाविव प्रतियोगितायामवच्छिन्नत्वं तत्र शङ्खत्वं तत्र सामानाधिकरण्येन पीतत्वमित्यादिक्रमेण भानम्। यत्तु पीतत्वविशिष्टशङ्खत्वं पीतः शङ्ख इति ज्ञाने प्रसिद्धं विषयितयोभयवैशिष्ट्यस्य ज्ञाने सत्त्वात् तदवच्छिन्नस्य संयोगादिनाऽभावधीरिति। तन्न, शङ्खादिपदात्समवायेन शङ्खत्वादिविशिष्टस्यैवोपस्थितेस्तदवच्छिन्नस्यैव प्रतियोगित्वानुभवाच्च।

केचित्तु पीतत्वशङ्खत्वावच्छिन्नप्रतियोगिता तत्र संसर्गतया भासत इत्याहुः॥

इति पञ्चलक्षणीटीका समाप्ता।

# अथ श्रीजगदीशभट्टाचार्यकृता

# सिंहव्याघ्रलक्षणव्याख्या ।

श्रीरस्तु । नापि साध्याऽसामानाधिकरण्याऽनधिकरणत्वम् ।

---

नाऽपीति । साध्यमसमानाधिकरणं यस्य यदधिकरणाऽनधिकरणं साध्यं तत्त्वम् ।

---

साध्याऽसामानाधिकरण्यपदस्य साध्यवद्भिन्नवृत्तित्वार्थकत्वे साध्यवैयधिकरण्येत्याद्युत्तरलक्षणेन पौनरुक्त्यापत्तिरतो व्याचष्टे साध्यमसमानाधिकरणं यस्येति । तत्त्वमिति परेणाऽन्वयः । वन्हिमात्रस्यैव व्यधिकरणतत्तद्धूमाऽसमानाधिकरणत्वात् वह्निमान् धूमादित्यादावव्याप्तेराह यदधिकरणेति । यदधिकरणमनधिकरणं यस्येति व्युत्पत्त्या यस्याऽधिकरणं साध्यसामान्याऽनधिकरणं तत्त्वमित्यर्थः । तत्तद्धूमाधिकरणन्तु न वन्हिसामान्यानधिकरणमतो नाव्याप्तिरिति भावः ।

जननीजनकौ नत्वा ध्यायं ध्यायं गुरोः पदम् ।
सिंहव्याघ्रलक्षणयोर्व्याख्यानं क्रियते मया ॥

**तत्त्वमिति परेणान्वय इति** । अत्र तत्त्वमित्यस्याऽपि अग्रेतनअनधिकरणत्वमित्यनेनाऽन्वयात्तत्त्वाऽनधिकरणत्वमित्यर्थः । **यदधिकरणमिति** । अत्र यदधिकरणत्वं यदि येन केनापि सम्बन्धेनोच्यते तदा वह्निमान् धूमादित्यादौ समवायेन धूमाधिकरणतामादायाऽव्याप्तिः, सम्बन्धसामान्येन यदि निवेश्यते कालिकसम्बन्धमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिः, सम्बन्धसामान्यनिवेशप्रकारश्च "सम्बन्धत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नसंसर्गताकनिरूपकताकाधिकरणत्वावच्छेदेन साध्यानधिकरणत्वमिति" पर्वताद्यन्तभावेण साध्यानधिकरणत्वविरहादिति चेदुच्यते । हेतुतावच्छेदकसम्बन्धानवच्छिन्नत्वहेतुतावच्छेदकधर्मावच्छिन्नत्वोभयाभाववद्यन्निष्ठनिरूपकताकाधिकरणं साध्यसामान्यानधिकरणं तत्त्वमित्यर्थे दोषाभावात् । वाच्यं प्रमेयवत इत्यादौ कालिकेन साध्ये हेतौ वाऽव्याप्तिवारणाय हेतुतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताऽवच्छेदकरूपवृत्तित्वहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयाभावस्य यन्निष्ठनिरूपकतायां निवेशनीयत्वात् । यत्राऽननुगतं हेतुतावच्छेदकं तत्रापि साक्षात्परंपरयाऽनुगमकमेव हेतुतावच्छेदकमिति अत्रापि प्रमेयत्वस्य हेतुतावच्छेदकत्वान्न कोपि दोष इति ध्येयम् ।

साध्यनिष्ठाऽसामानाधिकरण्यप्रतियोगित्वम् ।

---

**ननु घटादिस्वरूपयत्किञ्चिद्व्यक्त्यधिकरणं साध्यीभूतधूमाद्यनधिकरणं तद्व्यक्तित्वाऽनधिकरणत्वं वन्ह्यादेरपि अतो धूमवान् वन्हेरित्यादावतिव्याप्तिः यद्यद्व्यक्त्यधिकरणं साध्याऽनधिकरणं तत्तद्व्यक्तित्वाऽनधिकरणत्वोक्तौ तु महागौरवमत आह** साध्यनिष्ठेति । **साध्यनिष्ठाऽभावप्रतियोगित्वं सद्धेतोरप्यस्तीत्यतः सामानाधिकरण्याभाव उक्तः । न च साध्यनिष्ठस्य सामानाधिकरण्याभावस्य प्रतियोगित्वं सामानाधिकरण्ये एव न तु वन्ह्यादावित्यसद्धेतावतिव्याप्तिरिति वाच्यम्। साध्यनिष्ठाऽभावप्रतियोगिवृत्ति-**

---

**नन्विति** । यत्त्वतत्त्वेत्यादिना यत्किञ्चिदुपादाने घटजलत्वादिकमादायाऽतिप्रसङ्गः कूटनिवेशे च गौरवमिति भावः । **साध्यनिष्ठेतीति** । तथाच मूलस्थसाध्याऽसामानाधिकरण्यशब्दे साध्ये असामानाधिकरण्यं यस्येति व्युत्पत्त्यङ्गीकारेण भावप्रधाननिर्देशात् साध्यनिष्ठाऽसामानाधिकरण्यलाभ ।

असामानाधिकरण्यप्रतियोगित्वस्य सामानाधिकरण्ये एव सत्त्वाद् व्यभिचारिणि वह्न्यादिहेतुकेऽतिव्याप्तिमाशङ्कते **नचेति** । ननु गुणभिन्न गुणत्वसामानाधिकरण्यात् कपालभिन्न कपालवृत्तित्वादित्यादौ साध्यनिष्ठस्य सामानाधिकरण्याभावस्य प्रतियोगित्वं हेतावप्यस्तीति सद्धेतावव्याप्तिसम्भवे तत्परित्यागाऽनौचित्यम्। न च हेत्वभावाऽतिरिक्तत्वं तादृशसामानाधिकरण्याऽभावे निवेश्यैवाऽतिव्याप्तिर्वारणीयेति वाच्यम् । तथासति हेत्वभावाऽतिरिक्ताऽभावप्रतियोगित्वाऽनधिकरणत्वस्यैव सम्यक्त्वे सामानाधिकरण्यपदवैयर्थ्यापत्तेः । एतेन हेतुनिष्ठप्रतियोगिताभिन्नसामानाधिकरण्यनिष्ठप्रतियोगितानिवेशेनाऽव्याप्तिरिति निरस्तम् सत्तासाध्यकसमवायेन प्रमेयहेतावव्याप्तेश्च । हेतुनिष्ठप्रतियोगिताभिन्नप्रतियोगित्वाऽप्रसिद्धेः हेतुतावच्छेदकसम्बन्धप्रतियोगिहेतुनिष्ठप्रतियोगिताभिन्नत्वनिवेशे च कालिकविषयित्वादिसम्बन्धेन हेतुतायामव्याप्तिः, तादृशप्रतियोगित्वाऽप्रसिद्धेरिति चेन्मैवम् । हेतुतावच्छेदकावच्छिन्नत्वसामानाधिकरण्यत्वावच्छिन्नत्वोभयाभाववत्प्रतियोगिताकाभावस्य विवक्षणात्तानुपपत्तिः । न च सामानाधिकरण्यहेतुके हेतुतावच्छेदकस्य सामानाधिकरण्यत्वस्य चैक्येनोभयाप्रसिद्धिरिति वाच्यम् । हेतुतावच्छेदकनिष्ठाऽवच्छेदकतानिरूपितत्वविशिष्टसामानाधिकरण्यत्वनिष्ठाऽवच्छेदकतानिरूपितत्वाभाववत्प्रतियोगिताया एव विवक्षणादिति । न च तथापि कपालभिन्नं कपालत्वसामानाधिकरण्यादित्यादौ तादृशविशिष्टस्य प्रसिद्धत्वेऽपि तादृशनिरूपितत्वाभाववती या हेतुनिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिता तन्निरूपकाभावमादायाऽव्याप्तितादवस्थ्यमिति वाच्यम् । तत्प्रतियोगित्वाऽनधिकरणत्वमित्यनेन तत्प्रतियोगितावच्छेदकाऽनधिकरणत्वस्य विवक्षणेन वारणात् । परन्तु हेतुतावच्छेदकाऽनवच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वे सामानाधिकरण्यदलस्य वैयर्थ्यं दुर्वारमेवेति अखण्डाभावघटकतया सार्थक्यमनुसरणीयमिति ध्येयम् ।

अतिव्याप्तिं निराकरोति **साध्यनिष्ठाऽभावेति** । तथाच साध्यीभूतधूमनिष्ठो योऽभावः अयोगोलकनिरूपितवृत्तित्वं नास्तीत्याकारकस्तत्प्रतियोगिवृत्तित्वनिरूपकाधिकरणं

यदयोगोलकं तन्निरूपितवृत्तित्वाऽनधिकरणत्वस्य वह्नौ विरहान्नातिव्याप्तिः । न च वह्नौ ह्रदमहानसोभयनिरूपितवृत्तित्वाभावसत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिरिति वाच्यम् . साध्यनिष्ठाऽभावीयाऽऽधेयत्वनिष्ठप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता-पर्याप्त्यधिकरणनिरूपितवृत्तित्वस्य विवक्षितत्वात् । तथाचोभयनिरूपितवृत्तित्वाभावप्रतियो-गितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतापर्याप्त्यधिकरण न महानसमात्रं किन्तू-भयं धूमे तन्निरूपितवृत्तित्वानधिकरणत्वस्य सत्त्वान्नाऽव्याप्तिः ।

ननु साध्यनिष्ठाभावप्रतियोग्याधेयता साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा पर्वतनिरूपितसमवायसम्बन्धावच्छिन्नाऽऽधेयत्वाभावस्य वन्हौ सत्त्वाद् वह्निमान् धूमादित्या-दावव्याप्तिः, तथाच द्रव्यवान् सत्तावान् वा धूमादित्यादौ किंनिरूपितवृत्तित्वाभावः साध्ये इत्यप्रसिद्धिः । एवं पर्वतरूपान्यतरत्वहेतुके वन्हिसाध्यकेऽतिव्याप्तिश्च, साध्यनिष्ठाभावप्रति-योगिसाध्यतावच्छेदकसम्बन्धावच्छिन्नं यदाधेयत्वं तन्निरूपकपदेन रूपस्य धारणाऽसम्भवेन ह्रदादिवृत्तित्वाऽनधिकरणत्वस्य हेतौ सत्त्वात् । **अत्र केचित् ।** साध्यसामान्यनिष्ठाभावीय-प्रतियोगिताश्रयनिरूपितवृत्तित्वाऽनधिकरणत्वस्य विवक्षितत्वात् । प्रतियोगिता च साध्यता-वच्छेदकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्ना ग्राह्या । एवं च साध्यतावच्छेदकसम्ब-न्धावच्छिन्नाऽऽधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकयदभावः साध्ये तद्वृत्तित्वाऽनधिकरणत्व-मर्थः पर्यवसितः । तथाच सत्तायां समवायावच्छिन्नाऽऽधेयतया व्यधिकरणेन सम्बन्धेन सामान्याऽभावसम्भवान्न दोषः । एवं रूपस्य व्यधिकरणसम्बन्धतया तेन सम्बन्धेन रूपा-भावः सुतरां साध्य इति नातिव्याप्तिः । न च वह्न्यादौ संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन पर्वतह्रदोभयाभावमादाय तत्प्रतियोगितायाः पर्वते सत्त्वादव्याप्तिरिति वाच्यम् । व्यासज्य-वृत्तिधर्माऽनवच्छिन्नत्वेन प्रतियोगिताया विवक्षणीयत्वादिति ।

अत्र यद्यपि तादृशसम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेन प्रतियोगित्वाऽप्रसि-द्धिः, एवं तादृशप्रतियोगित्वाश्रयनिरूपितत्वाऽनधिकरणत्वपदेन हेतुतावच्छेदकसम्बन्धाव-च्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रतियोगित्वावच्छिन्नाभावो निवेश्यः, तथा चाऽत्रापि वृत्त्यनिया-मकसम्बन्धावच्छिन्नप्रतियोगित्वाऽनिवेशेन सन्दर्भविरोधश्चेति । तथापि साध्यतावच्छेदक-सम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वोभयाभाववती या वृत्तिता त-दभावस्य साध्ये निवेशात् । एवं हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वाऽनधि-करणत्वस्य हेतुतावच्छेदके निवेशान्न दोष इति ।

न च समवायेन प्रमेयसाध्यके प्रमेयहेतुके जातित्वावच्छिन्नवृत्तित्वाभावस्य तादृशत्वेपि न तादृशाभावः साध्यसामान्यनिष्ठ इत्यव्याप्तिसम्भवेनैतत्कल्पे सामान्यपदप्रक्षेपेण विषम-व्याप्तहेतावव्याप्तिरुक्ता जगदीशेन तदधुना विरुध्येत अत्राप्यव्याप्तेर्जागरूकत्वादिति वाच्यम् । सामान्यपदस्य व्यापकतावाचित्वेन सामानाधिकरण्येन साध्यतावच्छेदकसम्बन्धप्रतियोगि-त्वविशिष्टसाध्यतावच्छेदकव्यापकत्वस्याऽभावे निवेशात् ।

परे तु साध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगि-ताकयदधिकरणवृत्तित्वाभावः साध्यसामान्यनिष्ठः हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताक-

त्वनिरूपकाऽधिकरणवृत्तित्वस्य विवक्षितत्वात् । वस्तुतः असामानाधिकरण्यं सामानाधिकरण्यसम्बन्धेनाऽभाव इति परमार्थः ।

नचैवं द्रव्यं पृथिवीत्वादित्यादावव्याप्तिरिति वाच्यम् । सामानाधिकरण्याभावस्य व्याप्यवृत्तित्वेन साध्येऽसत्त्वात् एतदस्वरसेनैव वा कल्पान्तरानुसरणादित्यपरे ।

नन्वेवमपि वह्निमान् धूमादित्यादिविषमव्याप्तहेतावव्याप्तिः । महानसीयवह्निनिष्ठस्य पर्वतवृत्तित्वाद्यभावस्य प्रतियोगिभूतं यदाधेयत्वं तदव

च्छेदकताकाधिकरणत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादृशवृत्तितावच्छेदकत्वाधिकरणत्वाभावस्य हेतुतावच्छेदके निवेशान्नानुपपत्तिरिति ध्येयम् ।

**अत्रेदं चिन्त्यते** । आधेयभेदेन आधेयताभेदे वह्निमान् धूमादित्यादौ पर्वतनिरूपितधूमनिष्ठाधेयत्वाभावः साध्यसामान्येऽस्तीति पर्वतनिरूपितवृत्तित्वाऽनधिकरणत्वस्य हेतौ विरहादव्याप्तिरिति । न च यन्निरूपितवृत्तित्वसामान्याभावः साध्यसामान्ये तद्वृत्तित्वाऽनधिकरणत्वस्य हेतौ विवक्षणेन पर्वतनिरूपितवृत्तित्वसामान्याभावो न साध्ये किन्तु ह्रदनिरूपितवृत्तित्वाभावो इति नाव्याप्तिरिति वाच्यम् । एवमपि धूमवान् वह्नेरित्यादौ ह्रदनिरूपितवृत्तित्वाभावो धूमे तन्निरूपितवृत्तित्वाऽनधिकरणत्वस्य हेतौ सत्त्वादतिव्याप्तिरतः यद्यत्पदप्रक्षेपेण तत्तन्निरूपितवृत्तित्वाभावकूटवत्त्वानिवेशे पूर्वव्याख्यायां गौरवस्योन्मत्तप्रलपितत्वापत्तिः, अत्रापि कल्पे यद्यत्पदप्रवेशस्याऽवश्यकत्वादिति चेन्न । समुदितस्य सामान्यभेदस्य निवेशात् यद्यत्पदानामनुगतत्वाभावात् । निवेशप्रकारश्च साध्यतावच्छेदकताऽवच्छिन्नाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्ववत्तद्व्यक्तिनिरूपितवृत्तित्वाधिकरणत्वं नास्तीति प्रतिसिद्धाभावीयोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता सती वृत्तितात्वनिष्ठावच्छेदकतानिरूपिता या साध्यतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिना तन्निरूपकाभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतासमानाधिकरणाऽवच्छेदकतावृत्तित्वनिष्ठावच्छेदकतानिरूपिताऽधिकरणनिष्ठावच्छेदकतानिरूपितप्रतियोगितानिरूपकभेदो हेतौ व्याप्तिरिति ध्येयम् ।

**वस्तुत इति** । साध्यनिष्ठो यः सामानाधिकरण्यसम्बन्धावच्छिन्नयन्निष्ठप्रतियोगिताकोऽभावस्तदधिकरणवृत्तित्वाऽनधिकरणत्वमर्थः ।

साध्यनिष्ठो यद्रूपावच्छिन्नसामानाधिकरण्याऽभावस्तद्रूपवत्त्वमिति यावत् ।

**विषमव्याप्तहेतावव्याप्तिरिति** । अथाऽऽर्द्रेन्धनप्रभववह्निमान् धूमादित्यादिसमव्याप्तहेतावपि महानसीयवह्न्यात्मकाऽऽर्द्रेन्धनप्रभववह्नौ वर्त्तमानो यः पर्वतनिरूपितवृत्तित्वाभावस्तत्प्रतियोगित्वाऽनधिकरणत्वस्य हेतावसत्त्वादव्याप्तिसम्भवे विषमव्याप्तपर्यन्तमफलम् । न च समव्याप्तत्वावच्छेदेन नाव्याप्तिः, शब्दवान् गगनत्वादित्यादौ साध्ये गगनवृत्तित्वाभावाऽसत्त्वादिति वाच्यम् । विषमव्याप्तत्वावच्छेदेनाऽपि अव्याप्त्यसम्भवस्य तौल्यात्, सत्तावान् द्रव्यत्वादित्यत्र साध्ये द्रव्यवृत्तित्वाऽभावाऽसत्त्वादिति चेद् । अत्र केचित् । साध्यसामानाधिकरण्यसम्बन्धावच्छिन्नाभाव इत्यादि वस्तुतस्तु कल्पाभिप्रायकोयं ग्रन्थः, तथाच

साध्यनिष्ठाधेयत्वाऽनिरूपकाधिकरणवृत्तित्वमिति यावत् तदनधिकरणत्वमर्थः। साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वाऽनिरूपकत्वात्तद्वृत्तौ नातिप्रसङ्गः

---

**रूपके पर्वतादौ धूमादेर्वर्त्तमानत्वात्, साध्यसामान्यनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वोक्तौ च महागौरवमत आह** साध्यनिष्ठाधेयत्वेति। **अत्राधेयत्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यम्, तेन रूपवान् महाकालत्वादित्यादौ सम्बन्धसामान्येन रूपनिष्ठाधेयत्वाऽनिरूपके गगनादौ**

---

समव्याप्तहेतुके साध्ये तादृशसम्बन्धावच्छिन्नधूमाभावस्य किमप्यवच्छेदेनाऽसत्त्वात्, विषमस्थले च अयोगोलकावच्छेदेन तादृशसम्बन्धावच्छिन्नधूमाभावस्य साध्ये अयोगोलकीयवह्नौ सत्त्वादतस्तत्परित्याग इत्याहुः। तन्न। वह्निनिष्ठसामानाधिकरण्यसम्बन्धेन तत्तद्धूमाभावस्य प्रतियोगित्वाधिकरणत्वस्य तत्तद्धूमे सत्त्वाद् यथा विषमव्याप्तहेतौ तथा समव्याप्तहेतावपि अव्याप्तेस्तौल्यात्। यदि च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वाऽनधिकरणत्वस्य हेतुतावच्छेदके निवेशात् समव्याप्तहेतावव्याप्तेर्वारणं विषमस्थले तु अयोगोलकीयवन्हौ धूमसामान्याभावस्य तादृशसम्बन्धावच्छिन्नप्रतियोगिताकस्य प्रतियोगितावच्छेदकत्वाधिकरणत्वाद् भवत्यव्याप्तिरिति विभाव्यते, तदा धूमवान् वह्नेरित्यादौ वह्नित्वे तादृशप्रतियोगितावच्छेदकत्वाऽनधिकरणत्वसत्त्वाद् वन्हिसामान्याभावस्य साध्येऽसत्त्वादतिव्याप्तिरिति।

वस्तुतो विषमव्याप्तत्वं व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदककत्वमिति शब्दानां समानाधिकरणत्वात्, वह्नीनां व्यधिकरणत्वादार्द्रेन्धनप्रभववन्हिसाध्यकोपि विषमव्याप्त एवेति नासङ्गतिः।

केचित्तु स्वाऽसमानाधिकरणसाध्यकहेतोरेव विषमव्याप्तपदेन विवक्षणीयत्वादार्द्रेन्धनप्रभववह्निसाध्यकोऽपि तथा भवतीति नासङ्गतिरिति प्राहुः।

**महागौरवमिति**। अत्र प्रमेयसाध्यकस्थलेऽव्याप्तिमुपेक्ष्य गौरवदानमनुचितमिति तु नाशङ्कनीयम्, सामान्यपदस्य व्यापकतावाचित्वे साध्यतावच्छेदकसम्बन्धप्रतियोगित्वविशिष्टसाध्यतावच्छेदकव्यापकत्वस्याभावे निवेशात्।

**दीधितौ**। तदनधिकरणत्वं–तादृशवृत्तित्वाऽनधिकरणत्वम्, अर्थः–समुदितार्थः। वह्निमान् धूमादित्यादौ साध्यीभूतवह्निनिष्ठाधेयत्वानिरूपकाधिकरणं ह्रदादिस्तन्निरूपितवृत्तित्वाऽनधिकरणत्वं धूमे इति लक्षणसमन्वयः।

ननु वह्निमान् धूमादित्यादौ महानसादेः पर्वतीयवह्निनिष्ठाधेयत्वाऽनिरूपकत्वेन तद्वृत्तित्वाऽनधिकरणत्वस्य धूमे विरहादव्याप्तिरिति चेन्न। इह अनिरूपकत्वप्रतियोगिनिरूपकत्वं साध्यनिष्ठाऽधेयतात्वावच्छेदेन विवक्षणीयम्, तच्च आधेयतात्वव्यापकत्वम्, तथाच साध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितवृत्तित्वानधिकरणत्वमिति पर्यवसितम्। अत्र व्याप्यत्वं स्वाश्रयाश्रयत्वसम्बन्धेन, व्यापकत्वन्तु स्वनिरूपिताधेयतावत्त्वसम्बन्धेन, तेनाऽऽधेयतात्वानिरूपकत्वयोर्वैयधिकरण्येऽपि न क्षतिः। न च धूमवान् वह्नेरित्यादौ द्रव्यत्वावच्छिन्नाधेयतासाधारणसाध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नभे-

**हेतोरवृत्तित्वेऽपि नातिव्याप्तिः । तद्वृत्तौ साध्यवाक्चिन्नवृत्तौ ।**
दस्य गुणादावेव सत्त्वादतिव्याप्तिरिति वाच्यम् । [illegible] ऽऽधेयतात्वव्यापकत्वस्य [illegible]
कत्वे निवेशात्, तादृशाऽऽधेयतात्वव्यापकत्वं च साध्यतानुयोगिकस्वरूपसम्बन्धेनाऽऽधेयतात्वस-
म्बन्धावच्छिन्नप्रतियोगिताकतादृशाधेयतात्व न वर्तते स्वरूपसम्बन्धेनाऽवृत्तित्वम्
इदं चावच्छेदकभेदेन आधेयत्वनिरूपकत्वयोर्भेद इति मतेन [illegible] भेदेन भेदे तु सा-
ध्यनिष्ठाधेयतानिरूपकं यद्यत्तत्तद्भेदकूटमेव निवेश्यमिति ।

**हेतोरवृत्तित्वेपीति** । गगनानिरूपितवृत्तित्वाऽनाधिकरणत्वेऽपीत्यर्थः ।

**नातिव्याप्तिरिति** । महाकालत्वहेतौ समवायसम्बन्धावच्छिन्नरूपनिष्ठाधेयतानिरू-
पकमहाकालनिरूपितवृत्तित्वाऽनधिकरणत्वसत्त्वादिति भावः ।

यद्यपि कालिकसम्बन्धावच्छिन्नरूपनिष्ठाधेयतानिरूपकाधिकरणत्वस्य महाकाले सत्त्वात्
सम्बन्धसामान्येन रूपनिष्ठाधेयत्वाऽनिरूपके गगनादौ निरूपितवृत्तित्वाऽनधिकरणत्वस्य
कालत्वहेतावपि सत्त्वात्तत्रैवाऽतिव्याप्तिसम्भवे महाकालत्वपर्यन्तानुधावनं व्यर्थं, तथापि आधे-
यतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाऽनिवेशे यादृशहेतुकव्याप्तिलक्षणे तत्रैवाऽतिव्याप्ति-
स्तादृशो हेतुर्महाकालत्वमेव, तथाहि जन्यरूपवान् कालत्वादित्यादौ जन्यभावानाधिकरणी-
भूतमहाप्रलये कालिकसम्बन्धावच्छिन्ना या जन्यरूपादिनिष्ठाधेयता तदनिरूपकाधिकरणत्वस्य
सत्त्वात् तादृशप्रलयनिरूपितवृत्तित्वाधिकरणत्वस्य कालत्वे सत्त्वान्नातिव्याप्तिरतो महापदम् ।
तथाच महाकाले वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन सत्त्वात् महाकाले किञ्चिन्निष्ठाधेयताया
अनिरूपकाधिकरणत्वं नास्तीति ।

नं च तथापि कालिकेन वाच्यत्वज्ञेयत्वसाध्यहेतौ सम्बन्धसामान्येन स्वरूपसम्बन्धेन
वा वाच्यत्वनिष्ठाधेयत्वाऽनिरूपकाऽधिकरणाऽप्रसिद्ध्याऽव्याप्तिसम्भवेऽतिव्याप्तिदानमनुचित-
मिति, एवं महाकालभिन्नं घटत्वादित्यादौ कालिकसम्बन्धावच्छिन्नसाध्यनिष्ठाधेयतानिरूपक-
त्वस्य महाकाले स्वरूपसम्बन्धेन चाऽन्यत्र सत्त्वात् साध्यनिष्ठाधेयत्वानिरूपकाऽधिकरणा-
ऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । यत्किञ्चित्सम्बन्धेन साध्यनिष्ठाधेयता वाच्या इति नाव्या-
प्तिः । निवेशस्तु अवच्छिन्नत्वसम्बन्धविशिष्टसाध्यनिष्ठाधेयताविशिष्टत्वमेव हेतौ व्याप्तिः ।
वै० स्वनिरूपकत्व-स्वनिरूपकाधिकरणत्वैतदुभयसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदकताकप्रतियोगि-
ताकभेदवन्निरूपितवृत्तित्वाधिकरणत्वसम्बन्धावच्छिन्नस्वानिष्ठावच्छेदताकप्रतियोगिताकभेदवत्त्व-
सम्बन्धेनेति ।

निष्कर्षे च तादृशाधेयत्वाभावव्यापकत्वस्य अभावे निवेशात् । साध्यनिष्ठाधेयत्वाभावश्च
स्वनिरूपकत्व-स्वनिरूपकाधिकरणतावत्त्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको बोध्य इति न
क्वाप्यनुपपत्तिः । न च भेदत्वावच्छिन्ननिरूपकताकाधिकरणताभिन्नं पटत्वादित्यादावव्याप्तिः,
तथाहि—भेदत्वावच्छिन्नाधिकरणताभेदरूपसाध्यनिष्ठाधेयत्वाभावाऽप्रसिद्धेः, भेदाधिकरण-
तायां स्वनिरूपकत्वस्याऽधिकरणताविधया सत्त्वात्, अधिकरणविधया स्वनिरूपकवाच्यत्वा-
धिकरणतावत्त्वस्य च सत्त्वाद् वाच्यत्वस्य केवलान्वयितया तादृशाधिकरणतावृत्तित्वादिति
वाच्यम् । भेदत्वावच्छिन्नाधिकरणतात्वावच्छिन्नप्रतियोगिताकभेदरूपसाध्यनिष्ठाधेयत्वाभाव-

**ननु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमवश्यं हेतुतावच्छेदकसंबन्धेन वाच्यम्, अन्यथा वह्निनिष्ठाऽऽधेयत्वाऽनिरूपके स्वावयवे समवायादिना धूमादेः सत्त्वादव्याप्त्यापत्तेः, तथाच सत्तावान् द्रव्यत्वाद् धूमाद्वा इत्यादावव्याप्तिः, साध्यनिष्ठाऽऽधेयत्वानिरूपके जात्यादौ समवायेन संयो·**

---

स्य पटत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नाधिकरणतायां सत्त्वात् । यद्यपि तत्र स्वनिरूपकवाच्यत्त्वाधिकरणतावत्त्वं वर्त्तते परन्तु केनापि प्रकारेण स्वनिरूपकत्वविरहादतः उभयसम्बन्धावीच्छिन्नप्रतियोगिताकसाध्यनिष्ठाधेयत्वाभाववत्पटभेदाधिकरणतानिरूपितवृत्तित्वाऽनधिकरणत्वस्य पटत्वे सत्त्वान्नाव्याप्तिरिति । न च तथापि भेदनिष्ठनिरूपकताकाधिकरणताभिन्न भेदनिष्ठानिरूपकताकाधिकरणतात्वात्, तादृशाधिकरणत्वपटान्यतरत्वाद्वा इत्यादावतिव्याप्तिः, तथाहि—तादृशभेदरूपसाध्यनिष्ठाधेयत्वाभाववत्त्वं न हेत्वधिकरणीभूताधिकरणतायां अधिकरणताविधया स्वनिरूपकत्वस्य अधिकरणविधया स्वनिरूपकवाच्यत्वाधिकरणत्वस्य च द्वयोः सत्त्वात्—तादृशं च पटाधिकरणत्वमेव तद्वृत्तित्वाऽनधिकरणत्वस्य तादृशाधिकरणतात्वे सत्त्वादिति वाच्यम् । तथासति स्वनिरूपकत्वस्वनिष्ठनिरूप्यतानिरूपितविलक्षणानिरूपकतावदधिकरणतावत्त्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकाऽऽधेयत्वाभावस्य विवक्षितत्वान्नायं दोषः। तथाहि-स्वनिरूपकत्वसत्वेपि स्वनिष्ठनिरूपकतानिरूपितविलक्षणनिरूपकतावत्साध्याधिकरणतावत्त्वविरहात्, वैलक्षण्यं चाऽधिकरणनिष्ठनिरूपकताभिन्नत्वमेव, अधिकरणतात्वावच्छिन्नत्वमिति केचित्, तथाच वाच्यत्वाधिकरणत्वे च साध्यनिष्ठाऽऽधेयत्वनिरूप्यतानिरूपतविलक्षणनिरूपकतावत्त्वविरहान्नातिव्याप्तिः ।

न च तथापि स्वनिष्ठनिरूप्यतानिरूपितं विलक्षणं यदधिकरणनिष्ठं निरूपकत्वं तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्य, अथवा स्वनिष्ठनिरूप्यतानिरूपित विलक्षणं यदधिकरणत्वनिष्ठं निरूपकत्वं तदधिकरणतावत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्य वा अधेयत्वाभावस्यैव निर्वचनसामञ्जस्ये कृतमुभयसम्बन्धावच्छिन्नतादृशाऽऽधेयत्वाभावनिवेशनेनेति वाच्यम् । भवतु तादृश एव निवेशः किं नश्छिन्नं एतादृशार्थलाभार्थमेव तथोक्तत्वादिति ।

वस्तुतः एतादृशविलक्षणनिरूपकत्वसम्बन्धावच्छिन्नाभावनिवेशेऽपि वह्निमान् धूमादित्यादौ साध्यनिष्ठाऽऽधेयत्वाभाववद् यद् धूमाधिकरणत्वं तन्निरूपितवृत्तित्वाऽनधिकरणत्वस्य हेतावसत्त्वादव्याप्तिः, तत्रापि विलक्षणनिरूपकतानिरूपितवृत्तित्वस्य विवक्षणे वैलक्षण्यं दुर्वचमिति चेन्न । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधेयताविशिष्टान्यं यदधिकरणं तद्वृत्तिवृत्तित्वानधिकरणत्वस्य विवक्षितत्वात् ।

निष्कर्षे च तादृशाधेयताविशिष्टान्यत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वस्य विवक्षितत्वात् । सर्वत्र विशिष्टान्यत्वघटकवै० स्वनिरूपकत्वस्वविशिष्टनिरूपकताकाधिकरणतावत्त्वोभयसम्बन्धेन, निरूपकतायां स्ववैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन । वृत्तितायां तद्वृत्तित्वमपि एतादृशसम्बन्धेनैवेति विभावनीयम्।

**नान्वेति** । अत्र यत्किञ्चित्सम्बन्धेन वृत्तित्वोक्तौ चातिव्याप्तिर्द्रष्टव्या । **अप्रसिद्धेरिति** । न च हेतुतावच्छेदकस्वरूपान्यतरसम्बन्धेन वृत्तित्वं विवक्षणीयमिति वाच्यम् । तथासति

साध्यनिष्ठाऽऽधेयत्वानिरूपकाधिकरणत्वव्यापकाभाववत्प्रतियोग्यधिकरणता-

सामान्यकत्वमिति निष्कर्षः, तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः ।

---

गेन वा वृत्त्यप्रसिद्धेः, किञ्च द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः, द्रव्यत्वनिष्ठाधेयत्वाऽनिरूपकगुणादिवृत्तित्वस्य विशिष्टसत्तायां सत्त्वादित्यत आह साध्यनिष्ठेति ।

**धूमनिष्ठाऽऽधेयत्वाऽनिरूपके जलादौ वह्न्यधिकरणत्वाभावसत्त्वाद् व्यभिचारिणि अतिव्याप्तिरतो व्यापकेति । व्यापकत्वन्तु प्रतियोगिवैयधिकरण्याऽघटितमेव ग्राह्यम्, तेन संयोगेन वह्न्यधिकरणत्वस्याऽव्याप्यवृत्तितया तदभावस्य तप्तायःपिण्डवृत्तित्वेऽपि नातिव्याप्तिः । वह्न्यधिकरणत्वगगनाभयत्वाद्यवच्छिन्नाभावस्य धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादतिव्याप्तिरतः सामान्यपदम् ।**

**तथाच हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वसा-**

---

धूमवद्वृत्तित्वविशिष्टस्वरूपसम्बन्धेन वह्न्यधिकरणत्वहेतावव्याप्तेः, साध्यनिष्ठाधेयत्वानिरूपकाधिकरणेऽयःपिण्डे वह्न्यधिकरणत्वस्य स्वरूपसम्बन्धेन वृत्तेः अन्यतरत्वेन सम्बन्धत्वाऽनभ्युपगमाच्च । हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतासम्बन्धेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाभावस्य हेतुतावच्छेदकसम्बन्धान्यहेतुप्रतियोगिकसम्बन्धान्यसम्बन्धावच्छिन्नतादृशवृत्तित्वाभावस्य हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वावस्वरूपसम्बन्धेन तादृशवृत्तित्वाभावस्य वा निवेशे त्वाह **किञ्चेति** ।

अत्रापि रूपवान् महाकालत्वादित्यत्रातिव्याप्तिवारणाय साध्यनिष्ठाधेयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । एवमत्राधिकरणत्वमविवक्षितम्, तादृशाधेयत्वानिरूपकत्वव्यापकतैवाऽभावे निवेशनीयेति ध्येयम् । अभावे तादृशाऽऽधेयत्वानिरूपकाधिकरणतासामानाधिकरण्यमात्रनिवेशे दोषमाह **अतिव्याप्तिरिति** । एवं च व्यापकत्वनिवेशे वह्न्यधिकरणत्वाभावस्य धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वसमानाधिकरणत्वेऽपि तादृशाऽधिकरणत्वव्यापकत्वविरहान्नातिव्याप्तिरिति भावः ।

अथात्र स्वरूपसम्बन्धेन साध्यनिष्ठाधेयत्वानिरूपकत्ववद्यदधिकरणत्वं तद्व्यापकत्वं, सामानाधिकरण्यसम्बन्धेन तादृशनिरूपकत्वविशिष्टं यदधिकरणत्वं तद्व्यापकत्वं वा विवक्षितम् । नाद्यः, वह्निमान् धूमादित्यादावव्याप्तेः साध्याधिकरणताभिन्नाधिकरणतामात्रस्यैव साध्यनिष्ठाधेयत्वानिरूपकत्वात्, तादृशनिरूपकाधिकरणत्वव्यापकत्वस्य हेत्वधिकरणत्वाभावेऽप्रसिद्धेः । नान्त्यः, वह्निमान् वह्न्यधिकरणतात्वाद् वह्न्यधिकरणत्वपर्वतान्यतरत्वाद्वेत्यादावतिव्याप्तेः, वह्न्यधिकरणतात्मकपर्वतस्य साध्यनिष्ठाधेयतानिरूपकत्ववत्त्वात् इति चेन्न । साध्यनिष्ठाधेयत्वाभावप्रतियोग्यधिकरणतासामान्यकत्वस्य विवक्षितत्वात् । तादृशाधेयत्वाभावश्च स्वनिरूपकत्व-स्वनिरूपकाधिकरणत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताक इति । शेषं पूर्ववत् ।

सामान्यपदघटितलक्षणस्य फलितार्थमाह **तथाचेति** । हेतुतावच्छेदकसम्बन्धावच्छि-

मान्याभावत्वेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वं तद्धर्मवत्त्वमर्थः। तेन वह्निनिष्ठाधेयत्वानिरूपकाधिकरणजलादौ कालिकसम्बन्धेन धूमाधिकरणतायाः सत्त्वेऽपि नाव्याप्तिः, न वा वह्न्यधिकरणत्वाभावस्यापि प्रमेयत्वादिना धूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वेऽप्यतिव्याप्तिः।

न च हेतुतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नाऽभावत्वेन तादृशाधिकरणताऽव्यापकत्वमित्यस्यैव सम्यक्त्वेऽधिकरणत्वाभावपर्यन्ताऽनुप्रवेशो व्यर्थ इति वाच्यम्। वृत्त्यनियामकसम्बन्धेन हेतुतायामव्याप्तिप्रसङ्गात्, तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्धेः। अस्माकं तु तादृशसम्बन्धेन यद्धेतुसम्बन्धित्वं तस्य स्वरूपसम्बन्धावच्छिन्नाभावप्रतियोगित्वमा-

---

न्नयद्धर्मावच्छिन्नाधिकरणतात्वावच्छिन्नाभावत्व साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकतावच्छेदकं तादृशाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोगितावच्छेदक वा हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणतात्वं तद्धर्मवत्त्वं फलितम्। ( तादृशानिरूपकाधिकरणवृत्त्यभावप्रतियोगितायां स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽनवच्छेदकीभूताधिकरणतानिरूपकतावच्छेदकं स्वावच्छिन्नाधिकरणताकत्वसम्बन्धेनाऽनवच्छेदकं यद्धेतुतावच्छेदक तद्वत्त्वमर्थ इति न विशिष्टपरामर्शाऽनुपपत्तिः )

हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्य फलमाह **तेनेति । नाव्याप्तिरिति ।** संयोगसम्बन्धावच्छिन्नायाः धूमाधिकरणतायाः 'धूमाधिकरणत्वाभावाभावात्मिकायाः' जलादावसत्त्वादिति। अत्र यद्धर्मावच्छिन्नाधिकरणत्वनिष्ठं प्रतियोगित्वं स्वरूपसम्बन्धावच्छिन्नं ग्राह्यम्, अथोक्ताऽव्याप्तिवारणं न स्यादिति ध्येयम्। एवं यदधिकरणतामात्रनिवेशे द्रव्यविशिष्टसत्त्वादित्यादावव्याप्तिः। द्रव्यत्वनिष्ठाधेयत्वानिरूपके गुणादौ विशिष्टसत्ताधिकरणतासत्त्वात्। तादृशाधिकरणतासामान्याभावत्वेन व्यापकतानिवेशस्य फलमाह **नवेति**। व्यापकत्वं तु तद्वन्निष्ठाऽत्यन्ताभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वम्, न तु तद्वन्निष्ठात्यन्ताभावाऽप्रतियोगित्वं, सर्वस्यैव तथाविधद्वित्वावच्छिन्नाभावप्रतियोगितया तदप्रसिद्धेः, एवं च तादृशप्रतियोगिताऽनवच्छेदकीभूतप्रमेयत्वस्य सर्वत्र सत्त्वेन तेन रूपेण वह्न्यधिकरणत्वाभावस्यापि व्यापकत्वाक्षततया भवत्यतिव्याप्तिरित्यर्थः। न च तद्वन्निष्ठाऽन्योन्याभावप्रतियोगिताऽनवच्छेदकत्वमेव व्यापकत्वमिति वाच्यम्। एतद्वृक्षत्ववान् कपिसंयोगादित्यत्रातिव्याप्तेः। हेत्वभावस्य केवलान्वयित्वादिति। व्यापकतावच्छेदकत्वन्तु तद्वन्निष्ठात्यन्ताभावप्रतियोगिताऽनवच्छेदकत्वं अनवच्छेदकत्वं चावच्छेदकतापर्याप्त्यनधिकरणत्वं, तेनाऽभावत्वादिकमादाय नोक्तदोषतादवस्थ्यम्।

तादृशाधिकरणत्वव्यापकत्वं हेतुतावच्छेदकसम्बन्धेन हेत्वभावे एव निवेश्यं लाघवात्, न तु हेत्वधिकरणत्वाभावे गौरवादित्याशंकते **नचेति**। तथाच अधिकरणत्वानिवेशे वृत्त्यनियामकस्वामित्वसम्बन्धेन हेतुतास्थले चैत्रः तद्धनादित्यादौ व्यधिकरणसम्बन्धेन हेतुतास्थले च क्रमेणाऽव्याप्त्यतिव्याप्ती स्यातामिति भावः।

अथ हेतुतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नाभावत्वेन व्यापकत्वनिवेशे व्यापकताघटकाभावे तद्वन्निष्ठत्वं हेतुतावच्छेदकसम्बन्धेन निवेश्यम्, अन्यथा वह्निमान् धूमादित्यादौ सा-

दाय लक्षणसमन्वयः। किञ्चाऽधिकरणत्वाऽप्रवेशे वह्न्यादेः साध्यत्वे सं- योगादिसम्बन्धेन रूपादिहेतावतिव्याप्त्यापत्तिः संयोगेन रूपाभावस्य केव- लान्वयितया वह्निनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादिति भावः।

---

यन्निष्ठाधेयत्वानिरूपके ह्रदादौ धूमावयवे च धूमात्मकत्वस्य कालिकसंबन्धेनापि स- मवायेन च वृत्तेस्तत्प्रतियोगितावच्छेदकमेव धूमत्वमित्यव्याप्त्यापत्तेः, तथा च सत्ता- वान् द्रव्यत्वादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकसामान्यादौ हेतुतावच्छेदकीभूतसमवायसम्ब- न्धेन वृत्तेरप्रसिद्ध्याऽव्याप्तेर्जागरूकत्वात्तद्योगे किं बीजमिति चेत्।

अत्राहुः। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वमत्र साध्यनिष्ठाधेयत्वानिरूप- काधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्त्यधिकरणतानिरूपकताऽनवच्छेदक यत्तद्धर्मवत्त्वं यद्धर्मा- वच्छिन्नाभावत्वे निवेशनीयम्। अत्र यत्किञ्चिद्व्यक्तिनिष्ठाधिकरणतानिरूपितनिरूपकता हेतु- मत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्ना ग्राह्या, तथा च वह्निमान् धूमादित्यादौ धूमा- वयवनिरूपिता या हेतुमत्ताग्रहविरोधिताघटकीभूतस्वरूपसम्बन्धावच्छिन्ना निरूपकता तदवच्छेदकत्वस्यैव संयोगसम्बन्धावच्छिन्नधूमाभावत्वे सत्त्वान् नाव्याप्तिः। एवं सत्तावान् द्रव्यत्वादित्यादौ सामान्यादिनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्य हेत्वभावत्वे सत्त्वान्नाव्याप्तिः। यत्किञ्चित्त्वनिवेशाद् धूमवान् वह्नेरित्यादौ ह्रदादिकमुपादाय न दोष इति।

**अत्रेदं चिन्त्यते**। द्रव्यगुणान्यतरत्ववान् कर्मत्वाभावादित्यत्र व्यभिचारिण्यतिव्या- प्तिः तादृशयत्किञ्चित्पदेन जात्यादिकं धर्तुं न शक्यते समवायात्मकहेतुमत्ताग्रहविरोधिताघ- टकसम्बन्धेन तन्निरूपितनिरूपकत्वाऽप्रसिद्धेः। यदि च कर्म ध्रियते, तदा तादृशसम्बन्धाव- च्छिन्नतन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्यैव हेत्वभावत्वे सत्त्वान्निरुक्तव्यापक- तावच्छेदकत्वस्याऽक्षतेरिति। एतेन तादृशाधिकरणताव्यापकत्वं न तद्व्यक्तिनिष्ठाभावप्रतियो- गितावच्छेदकत्वं, यत्किञ्चित्त्वस्य दुर्वचत्वात्, किन्तु तादृशाधिकरणताविशिष्टान्यत्वं हेत्वभा- वत्वे विवक्षणीयम्, वै० स्वनिष्ठावच्छेदकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। स्वनिष्ठावच्छेदकता च निरवच्छिन्नाऽऽधेयत्वसम्बन्धावच्छिन्ना, आधेयता च हेतुमत्ताग्रहविरोधिताघटकसम्बन्धा- वच्छिन्ना ग्राह्येति, एवं च न प्रागुक्तदोषाणामवकाश इति निरस्तम्। द्रव्यत्वगुणत्वान्यतरवान् द्रव्यगुणान्यतरत्ववान् वा कर्मत्वाभावादित्यादावतिव्याप्तिः, तादृशनिरूपकताधिकरणपदेन जात्यादेर्धारणाऽसम्भवात् तन्निष्ठाधिकरणतानिरूपितहेतुमत्ताग्रहविरोधिताघटकसमवायस- म्बन्धावच्छिन्नाधेयत्वाऽप्रसिद्धेः, किन्तु तादृशाधिकरणपदेन कर्मणः धारणं तद्विशिष्टान्यत्वस्य हेत्वभावत्वे सत्त्वादिति। न च प्रतियोगिवैयधिकरण्यघटितव्यापकता निवेश्या, व्यापकताघ- टकाभावे तद्व्यक्तिनिष्ठत्व न सम्बन्धविशेषेण वैफल्यादिति वाच्यम्। अव्याप्यवृत्तिहेतुरूपव्यभि- चारिणि अतिप्रसङ्गात्।

यदि च साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयद्व्यक्तिनिष्ठाधिकरणतासामान्ये हेतुताव- च्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वावच्छिन्नत्वहेतुमत्ताग्रहविरोधिताघटकसम्बन्धाव- च्छिन्नत्वोभयाभावस्तद्धर्मभिन्नत्वमेव व्याप्तिः, तथाच धूमवान् वह्नेरित्यादौ साध्यनिष्ठाधेय- त्वानिरूपकाऽयोगोलकनिष्ठाधिकरणतासामान्ये संयोगसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नत्व-

## साध्यवैयधिकरण्याऽनधिकरणत्वं वा ।

### साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वम् ।

साध्यवद्भिन्नेति । अत्रापि साध्यवद्भिन्नत्वव्यापकाभावप्रतियोग्यधिकरणस्वरूपसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वात् यत्पदेन वह्नित्वस्य धारणान्नातिव्याप्तिः । वह्निमान् धूमादित्यादौ च साध्यनिष्ठाधेयत्वानिरूपकह्रदादिनिष्ठाधिकरणतासामान्ये संयोगसम्बन्धावच्छिन्नधूमत्वाभावत्वावच्छिन्नत्वस्वरूपसम्बन्धावच्छिन्नत्वयोः सत्त्वेन यद्धर्मपदेन धूमत्वस्य धारणासम्भवान्नाऽव्याप्तिः । अधिकरणत्व च निरवच्छिन्नं ग्राह्यं, तेन धूमवान् वह्नेरित्यादौ संयोगेन वह्नेरव्याप्यवृत्तित्वादयोगोलकनिष्ठाधिकरणतायां वह्न्यभावत्वावच्छिन्नाधिकरणतायां तादृशोभयाभावान्नातिव्याप्तिरित्युच्यते, तदाऽस्य सामान्यपदघटितत्वेन यद्धर्मावच्छिन्नाधिकरणत्वाभावत्वे साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वापेक्षया महागौरवाद् व्याप्तित्वं न सम्भवतीति ।

वस्तुतः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगिताऽनवच्छेदकयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं पर्यवसितम् । निरूपकता च हेतुवताच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वहेतुनिष्ठत्वोभयाभाववती ग्राह्या सम्बन्धान्तरावच्छिन्नधर्मान्तरावच्छिन्नवृत्तितामादायैव सत्तावान् जातेरित्यादौ लक्षणसमन्वयसम्भवात् ।

यद्यपि सत्तावान् समवायेन प्रमेयादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकजात्यादिनिष्ठाधिकरणतानिरूपितनिरुक्तोभयाभाववन्निरूपकत्वाऽप्रसिद्धिस्तथापि हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नाभावाभावत्वावच्छिन्नत्वोभयाभावस्यैव विवक्षितत्वात् सामान्यादिनिष्ठाधिकरणतानिरूपितवाच्यत्वादिनिष्ठनिरूपकताया एव प्रसिद्धत्वान्नानुपपत्तिः । द्रव्यं विशिष्टसत्त्वादित्यादौ गुणादिनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकीभूता न विशिष्टसत्ताभावाभावत्वरूपानुयोगितेति तत्रापि लक्षणगमनादतो वह्निमान् रूपादित्यादावतिव्याप्तिपर्यन्तानुधावनमिति विभावनीयम् ।

केचित्तु अत्र निरूपकत्वं न सम्बन्धविशेषेण निवेश्यम्, संयोगसम्बन्धावच्छिन्नधूमाभावाभावत्वस्य संयोगातिरिक्तसम्बन्धावच्छिन्ननिरूपकताऽनवच्छेदवत्वात् वह्निमान् धूमादित्यादावव्याप्तिविरहात्, एकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावत्वस्याऽन्यसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वाऽस्वीकारात्, एवं च साध्यनिष्ठाधेयत्वानिरूपकाधिकरणनिष्ठाधिकरणतानिरूपकतावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकं यद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वमेव विवक्षणीयम् । अत एव कपालस्य समवायेन घटत्वावच्छिन्नवत्त्वेऽपि संयोगसम्बन्धावच्छिन्नघटाभावाभावत्वावच्छिन्नवत्वाप्रसिद्ध्यैव तादृूप्येण प्रमात्वाऽसम्भवात्, समवायसम्बन्धेनैव तादृशघटाभावाभावत्वावच्छिन्नाधिकरणतायाः पारमार्थिकत्वादिति केवलान्वयिग्रन्थे जगदीशेन समाहितम् ।

विभिन्नमधिकरणं यस्य तत् व्यधिकरणं तस्य भावस्तत्त्वम् । साध्याद्वैयधिकरण्यं साध्यवैयधिकरण्यम् । साध्यपदस्य साध्याधिकरणे लक्षणा, तथाच साध्यानधिकरणवृत्तित्वलाभः तदेवोक्तं दीधितौ **साध्यवद्भिन्नाधिकरणकत्वमिति** ।

## तदुभयमपि साध्यानधिकरणाऽनधिकरणत्वम् ।

चरमाधिकरणत्वांशस्याऽनतिप्रयोजनकतया तदपहाय द्वयमेकाकाङ्क्षयाऽ-

तासामान्यकत्वमिति निष्कर्षो बोध्यः, तेन सत्तावान् द्रव्यत्वादित्यादौ नाऽव्याप्तिः ।

**ननु प्रागुक्तस्याऽर्थस्य शब्दान्तरेणाऽभिधानमनुवादः स चात्राऽसम्भवी, साध्यं यदधिकरणानाधिकरणं तत्त्वाऽनाधिकरणत्वस्य साध्यवद्भिन्नवृत्तित्वानधिकरणत्वस्य च प्रागुक्तस्य साध्याऽनधिकरणानधिकरणत्वशब्देनाऽबोधनादत आह—** चरमेति । **तत्त्वाधिकरणत्वाभावे तत्त्वाभावस्याऽप्रवेशाद्वैयर्थ्यमसम्भवीत्यत उक्तम्** अनतिप्रयोजनकतयेति । **तथात्र प्रकृतलक्षणवाक्यस्य साध्यं यदधिकरणाऽनधिकरणं तत्त्वाभावे साध्यस्य यदनधिकरणं तदवृत्तित्वाभावे एव च तात्पर्यात् प्रागभिप्रेतार्थस्य शब्दान्तरेणाभिधानमेवानुवादः स चात्र सम्भवत्येवेति भावः ।**

**अबोधनादिति ।** मूलोक्तलक्षणयोरधिकरणनात्रयघटितत्वात् अनुवादे चाऽधिकरणताद्वयमात्रस्य निवेशादित्यर्थः । **चरमेतीति ।** इदमुपलक्षणम् निष्कृष्टोक्तलक्षणद्वये प्रथमाधिकरणत्वांशस्यापि वैयर्थ्यं द्रष्टव्यम् साध्यनिष्ठाधेयत्वानिरूपकत्वसाध्यवद्भिन्नत्वयोरेवाऽदुष्टत्वात्, साध्यनिष्ठाधेयत्वानिरूपकं यद्रूपाद्यधिकरणत्वं हेत्वभावस्य पर्वतादौ तदव्यापकत्वेन वह्निमान् धूमादित्यादौ असम्भवापादकत्वाच्च ।

**तात्पर्यादिति ।** नन्वसंगतमेतत् अधिकरणताया आनिवेशे प्रतियोगिवैयधिकरण्याऽघटितव्यापकत्वस्य दुर्वचत्वात्, तथाहि—तदनिवेशे व्यापकताघटकाभावे साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वं न सम्बन्धसामान्येन, वन्हिमान् धूमादित्यादौ धूमाद्यभावाभावस्य धूमादेः कालिकादिसम्बन्धेन तादृशानिरूपकाधिकरणवृत्तित्वेनाऽव्याप्तेः । न च व्यापकतायां प्रतियोगिवैयधिकरण्यनिवेशेन तद्विशिष्टधूमाभावाभावस्य ह्रदादावसत्त्वान्न दोष इति वाच्यम् । व्यापकत्व च प्रतियोगिवैयधिकरण्याघटितमिति पूर्वग्रन्थविरोधात् । नाप्यभावीयविशेषणतया धूमवान् वन्हेरित्यादौ वह्न्यभावाभावस्य तेन सम्बन्धेनाऽवृत्तितयाऽतिव्याप्तेः । भावाऽभावसाधारणदैशिकविशेषणतायां मानाभावात् । नापि हेतुतावच्छेदकसम्बन्धेन, सत्तावान् द्रव्यत्वादित्यादाव्याप्तेः, समवायेन तादृशाऽनिरूपकाधिकरणवृत्तित्वाऽप्रसिद्धेः । एवं तद्दलाऽनुक्तौ यद्धर्मावच्छिन्नाभावः तादृशाधिकरणत्वव्यापकस्तद्धर्मवत्त्वमिति पर्यवसितम् । अत्र यद्धर्मावच्छिन्नाभावीयप्रतियोगिता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा धूमवान् वह्नेरित्यादौ स्वरूपसम्बन्धावच्छिन्नवह्न्यभावस्य तादृशाधिकरणत्वव्यापकत्वादतिव्याप्त्यापत्तेः, तथाच वृत्त्यनियामकसम्बन्धेन हेतुताया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिः, एवं वन्हिमान् संयोगेन रूपादित्यादौ तादृशसम्बन्धावच्छिन्नरूपाद्यभावस्य केवलान्वयितया व्यापकत्वात्क्षतेरित्यातिव्याप्तिश्च । चरमाधिकरणत्वप्रवेशे तु अधिकरणतास्थले सम्बन्धितानिवेशेन तस्याः स्वरूपसम्बन्धावच्छिन्न-

प्रतियोगिताकाभावस्य व्यापकताघटकाभावे स्वरूपसम्बन्धेनैव तद्वृत्तित्वस्य प्रवेश्यतया न दुर्वचत्वमिति चेन्न । हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वं तादृशाधिकरणत्वव्यापकतावच्छेदकमित्यस्यैव लक्षणत्वात् इति चरमाधिकरणत्वाऽनिवेशेऽपि वृत्त्यनियामकसम्बन्धावच्छिन्नाऽवच्छेदकताकभेदस्वीकारान्नाऽव्याप्तिः । संयोगेन रूपादिहेतुके संयोगस्य व्यधिकरणतया तत्सम्बन्धावच्छिन्नावच्छेदताकभेदाऽस्वीकारान्नातिव्याप्तिरिति ।

केचित्तु एतद्ग्रन्थस्य मूले तदुभयमित्यादिनाऽनुवादयोग्ययथाश्रुतसाध्याऽसामानाधिकरण्यवैयधिकरण्याऽनधिकरणत्वरूपलक्षणद्वयपरतयाऽदोषात् निष्कृष्टोक्तलक्षणद्वयस्य कथमप्यनुवादाऽसंभवात् अत एव चरमेत्युक्तम्, निष्कृष्टलक्षणे तूक्तरीत्याऽऽद्याऽधिकरणत्वस्याप्यनतिप्रयोजनकत्वात् इत्याहुः ।

वस्तुतस्तु निष्कृष्टोक्तलक्षणद्वयपरत्वेऽपि न दोषः, अधिकरणतामनिवेश्याभावीयविशेषणतया वृत्तित्वघटितव्यापकत्वस्य सुवचत्वात् । न वोक्तदोषः, घटो नास्ति घटाभावो नास्तीत्यादिप्रतीत्या विशेषणताया भावाऽभावसाधारणत्वात् । नचैवं तया भूतलवृत्तिर्घटाभाव इति प्रतीतिवत्तया भूतलवृत्तिर्घट इत्यपि प्रतीतिः स्यादिति वाच्यम् । तेन सम्बन्धेन भूतलादिवृत्तितावच्छेदकत्वस्य घटाभावाभावत्वादावेवाङ्गीकारेण घटत्वादौ तदभावात्, तेन सम्बन्धेन भूतलवृत्तिघटाभावाभाव इति प्रतीतिस्त्विष्टैव । न च वन्हिमान् आकाशादित्यादावतिव्याप्तिवारणायाऽधिकरणता निवेशनीयेति वाच्यम् । तत्र पक्षधर्मताविरहादेवाऽसद्धेतुत्वोपपत्तौ व्याप्तिसत्त्वे इष्टापत्तेः ।

यद्वा अधिकरणताया अनिवेशे हेत्वभावत्वे व्यापकतावच्छेदकत्वं न तद्वद्वृत्त्यत्यन्ताभावप्रतियोगिताऽनवच्छेदकत्वं किन्तु स्वावच्छिन्नाभाववद्वृत्तितत्कत्वम्, तच्च सुवचमेव, स्वावच्छिन्नाभाववत्त्व च हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रतियोगिताकहेत्वभाववत्ताग्रहविरोधितानियामकसम्बन्धेन वाच्यम्, तेन धूमाभावत्वावच्छिन्नाभावात्मकधूमादेः कालिकसम्बन्धेनाऽधिकरणे ह्रदादौ तादृशानिरूपकाधिकरणत्वसत्त्वेऽपि वन्हिमान् धूमादित्यादौ नाव्याप्तिः । वृत्तिता च विशेषणतया वाच्या, तेन निरुक्तसंयोगादिसम्बन्धेन धूमादिमति महानसादौ कालिकादिसम्बन्धेन तादृशाऽनिरूपकाधिकरणत्वसत्त्वेऽपि न तत्राऽव्याप्तिः । स्वावच्छिन्नाभाववत्त्वं च स्वावच्छिन्नाभावत्वविशिष्टवत्त्वं, तेन द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः, गुणे विशिष्टसत्ताभावाभावात्मकसत्तावत्त्वेऽपि विशिष्टसत्ताभावत्वविशिष्टवत्त्वाभावात् । एवं सत्तावान् द्रव्यत्वादित्यादौ न दोषः, तादृशेन समवायेन द्रव्यत्ववति विशेषणतया वृत्तित्वप्रसिद्धेः । स्वावच्छिन्नाभाववत्त्वं हेतुतावच्छेदकसम्बन्धेन वाच्यमिति तु न युक्तम्, एतद्रूपप्रकारकप्रमाविशेष्यत्वजातित्वप्रकारकप्रमाविशेष्यत्वान्यतरवान् तादात्म्येन घटादित्यादावतिव्याप्तिः, अन्योन्याभावाभावस्य प्रतियोगितावच्छेदकरूपत्वेन तत्र तादात्म्येन घटभेदत्वावच्छिन्नाभावात्मकघटत्ववति घटत्वे तादृशानिरूपकाधिकरणत्वस्यासत्त्वात्, तादृशसम्बन्धविवक्षणे तत्र समवायस्यापि तादृशत्वेन तेन तद्वति व्यभिचारनिरूपकाधिकरणे तादृशानिरूपकाधिकरणत्वसत्त्वेनाऽदोषात् ।

नूद्य दूषयति **तदुभयमपीति** । साध्येत्यादेः साध्यं यदधिकरणानधि-

---

साध्यमित्यादि । **साध्यानधिकरणेत्यादौ मध्यवर्त्तिनञो व्यत्यासेन चर-माधिकरणत्वांशेन सहान्वयादेव तल्लाभ इत्याशयः ।**

---

यद्वा प्रतियोगितावच्छेदकविशिष्टप्रतियोगिमत्ताग्रहविरोधितानिरूपकसम्बन्धेन वृत्तित्वघटितनिर्दुष्टव्यापकत्वमधिकरणातामनिवेश्य सुवचम् ।

अपरे तु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वसमानाधिकरणाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्यद्धर्मावच्छिन्नाभावसमानाधिकरणाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्व तद्धर्मवत्त्वं विवक्षितम्, तथा च नाऽधिकरणत्वांशसार्थक्यमित्याहुः ।

साध्यानधिकरणेत्यादिमूलस्य निष्कृष्टलक्षणार्थाऽनुवादकत्वाऽसंभवेन तदनुपदर्शितयथाश्रुतलक्षणार्थद्वयस्याऽनुवादं स्फुटयितुं साध्यानधिकरणेत्यादि मूलं धृत्वैव व्याचष्टे इति **साध्येत्यादेः** लक्षणद्वयस्य क्रमेणेति शेषः । तत्त्वाभाव इत्यन्तेन प्रथमलक्षणार्थकथनम् ।

ननु साध्याऽनधिकरणाऽनधिकरणत्वमिति मूलेन साध्यं यदधिकरणानधिकरणं तत्त्वाभाव इत्येतादृशार्थाऽबोधनाद्विनिग्रन्थाऽसङ्गतिरिति चेन्न । आदौ अधिकरणमनधिकरण यस्येति बहुव्रीहिः । व्यासार्थो यन्निरूपिताधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणम् । समासाच्च अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकनिरूपकताकाधेयतावत् साध्य इति बोधः । साध्य अधिकरणानधिकरण यस्य तत्साध्याधिकरणानधिकरणमिति पुनर्बहुव्रीहिः । विग्रहात् यदधिकरणनिष्ठभेदप्रतियोगितावच्छेदकनिरूपकताकाधेयतावत्साध्यमिति, समासाच्च साध्यनिष्ठाधेयतानिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणवृत्तिः, कइति बोधः । ततो भावार्थकत्वप्रत्ययेन तत्त्वलाभः । ततः साध्याधिकरणानधिकरणत्वस्याभावः, न साध्याधिकरणाऽनधिकरणत्वमिति वा नञ्तत्पुरुषः । नञः साध्यपदोत्तरं निपातः तथा च साध्यपदोत्तरनिविष्टनञा तदभावः प्रत्याय्यते तथाचानुपदमेव वक्ष्यति मध्यवर्त्तिनञो व्यत्यासेनेति । तथाच साध्यानधिकरणानधिकरणत्वमित्यस्य प्रथमलक्षणार्थबोधकत्वं स्पष्टमेव ।

केचित्तु साध्यमित्यादि साध्यमनधिकरणाधिकरणं यस्य तत्साध्यानाधिकरणं, तस्य भावः साध्यानधिकरणाधिकरणत्वमित्येव पाठः । अत्रादौ अधिकरणमधिकरणं यस्येत्यधिकरणाधिकरणमिति बहुव्रीहिः । विग्रहात् यन्निष्ठवृत्तित्वनिरूपकमधिकरणमिति बोधः । समासाच्चाऽधिकरणनिरूपितवृत्तित्वाश्रय इति बोधः । बहुव्रीहौ विग्रहजन्यबोधीयविशेष्यविशेषणभाववैपरीत्येन बोधजनकत्वात् चित्रा गौर्यस्येति विग्रहवाच्यात् यत्पदार्थसम्बन्धित्वेन चित्रगोः, चित्रगुरित्यतः चित्रगोसाम्बन्धित्वेन यत्पदार्थबोधात् । एवमत्रापि, तथाचाऽधिकरणाधिकरणमित्यनेनाऽधिकरणाऽवृत्तीति लब्धं, ततो न अधिकरणाधिकरणमिति अनधिकरणाधिकरणमिति नञ्समासः अधिकरणवृत्तिभिन्नमिति बोधः, तथाचाऽनधिकरणाधिकरणमित्यनेनाऽधिकरणाऽवृत्तीति लब्धं, ततः साध्यमनधिकरणाधिकरणं यस्य तत्साध्यानाधिकरणमिति बहुव्रीहिः । विग्रहात् साध्यं यदधिकरणाऽवृत्तीति बोधः, समासात्साध्यनिष्ठभेदप्रतियोगिता-

वच्छेदकवृत्तित्वनिरूपकाधिकरणवृत्तित्वरूपसाध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वलाभ इति सिद्धम् । यद्वा आदौ नाधिकरणाधिकरणमिति बहुव्रीहिः । विग्रहात् यदाधेयत्वानिरूपकम धिकरणमिति बोधः, समासाच्चाऽधिकरणनिष्ठभेदप्रतियोगितावच्छेदकानिरूपकताकाधेयतावदिति बोधः, तथाचाऽनधिकरणाधिकरणमित्यनेनाऽधिकरणनिष्ठभेदप्रतियोगितावच्छेदकनिरूपकताकाधेयतावदिति लब्धं, तत. साध्यमनधिकरणाधिकरण यस्य तत्साध्यानधिकरणाधिकरणमिति बहुव्रीहिः । विग्रहात् यदधिकरणनिष्ठभेदप्रतियोगितावच्छेदकानिरूपकताकाधेयतावत्साध्यमिति, समासाच्च साध्यनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवदधिकरणकमिति बोधः। त्वप्रत्ययेन तत्त्वलाभः तदभावश्चरमनञर्थ इति प्रथमलक्षणवाक्यार्थ इत्याहुः । तच्चिन्त्यम् । मध्यवर्त्तिनञो व्यत्यासेनेत्यग्रिमग्रन्थानुरोधादुपेक्षणीय इति ।

ननु साध्याऽधिकरणानधिकरणत्वपदेन नञ्समासे सत्येव तत्त्वाभावो नञा प्रत्याययितुं शक्यते, तथाच साध्यपदोत्तरं नञो निपातोऽसम्भवी असाध्याधिकरणाऽनधिकरणत्वमिति प्रयोगापत्तिः, अत्र यदि अत्यन्ताभावार्थकेन नञा उत्तरपदार्थाऽभावे विद्यमानं यदव्ययं तन्समस्यते इत्यर्थकेन "अव्ययं विभक्ती"इत्यादिसूत्रेण सिद्धोऽव्ययीभावः । यदि वा सुबन्तेन नञ् समस्यते इत्यर्थकेन "नञिति" सूत्रेण सिद्धस्तत्पुरुषो नाऽश्रीयते उभयथापि नञ एव पूर्वनिपातस्यैव अव्ययोमति नञिति च प्रथमान्तपदप्रतिपाद्यत्वेन, समासशास्त्रे प्रथमान्तशब्दप्रतिपाद्यमुपसर्जनसज्ञं स्यादित्यर्थकेन "प्रथमानिर्दिष्टं समास उपसर्जन" मिति सूत्रेणोपसर्जनसंज्ञाविधानात् "उपसर्जन पूर्वमिति" पाणिनिनाऽभिधानेन समस्यमानपूर्वपदनिपतितस्यैव नञः साध्यत्वादन्यथा अचित्रगुरित्यादौ चित्रादिपदोत्तरमपि नञ्प्रयोगापत्तेरिति चेन्न । ससम्बन्धिकार्थबोधकोत्तरपदघटितसमुदायेन समं नञ्समासस्थले नञो मध्यनिवेशस्यापि साधुत्वसम्पादकत्वात् तथाचाऽगत्या पृषोदरादिगणपाठकल्पनया निरुक्तप्रयोगाणां साधुत्वमुपपादनीयमिति भावः ।

यस्तु नञ्व्यत्यासेनैव विवक्षिताऽन्वयबोधोपपत्तौ नञो मध्यनिवेशेऽपि न क्षतिरित्याह । तत्तुच्छम् । सर्वत्र नञ्व्यत्यासेनोपपत्तौ नञो मध्यनिवेशस्य क्वापि दोषत्वं न स्यादिति ध्येयम् ।

**अत्रेदं बोध्यम्** । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूपः प्रथमलक्षणस्य यथाश्रुतनिष्कृष्टार्थोपि साध्यानधिकरणानधिकरणत्वशब्देन प्रतिपाद्यते, तथाहि—आधेयतानिरूपकार्थकचरमाधिकरणपदघटितेनाऽधिकरणानधिकरणपदेन अधिकरणमाधेयत्वानिरूपकं यस्य तदधिकरणानधिकरणमिति व्युत्पत्त्या अधिकरणनिष्ठभेदप्रतियोगिताकानिरूपकताकाऽधिकरणवृत्तिलाभः त्वप्रत्ययेन तत्त्वलाभः तदभावः साध्यपदोत्तरनञेति ।

**इदमुपलक्षणम्** । साध्यनिष्ठाऽसामानाधिकरण्यप्रतियोगित्वरूपस्याप्यर्थस्य लाभः सम्भवति, तथाहि–साध्येऽधिकरणाऽनधिकरणत्वं यदधिकरणवृत्तित्वाभावो यस्य तत्साध्याधिकरणाऽनधिकरणत्वं भावप्रधानतया तत्त्वलाभः तदभावश्च साध्यपदोत्तरनञा बोध्यते इति साध्यनिष्ठासामानाधिकरण्यसम्बन्धित्वाभावलाभः, सम्बन्धश्च प्रतियोगित्वमेवेति ।

एवं साध्यनिष्ठाधेयत्वानिरूपकत्वस्य साध्यवद्भिन्नत्वस्य वा व्यापकीभूतो योऽभावस्त-

**तच्च तत्र यत्किंचित्साध्याऽनधिकरणाधिकरणे धूमे चाऽप्रसिद्धम् ।**

---

करणं तत्त्वाभावः, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः ।

तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वाऽनिरूपकाधिकरणाऽप्रसिद्ध्या नाना-व्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वाऽनिरूपकाधिकरणत्वं साधना-

---

केवलान्वयिनीति । **अव्याप्तिरिति परेणान्वयः । अव्याप्तेर्हेतुमाह** साध्यनि-ष्ठेति । **नानाव्यक्तिसाध्यके चेति मूलोक्तं धूमहेतुमभिप्रेत्य, तेन शब्दवान् गगनत्वादित्यादौ नानाव्यक्तिसाध्यकाऽव्याप्तिविरहेऽपि न क्षतिः । न्यूनतां**

---

तत्प्रतियोग्यधिकरणतासामान्यकत्वरूपोऽप्यर्थः साध्यानधिकरणानधिकरणत्वशब्दात्प्रतिपादयितुं शक्यते, तथाहि–साध्यानधिकरण अधिकरणं यस्येति व्युत्पत्तिः, तत्र साध्यानधिकरण-मित्यस्य साध्यनिष्ठाधेयत्वानिरूपक साध्यवद्भिन्न वाऽर्थः, अनधिकरण यस्येत्यत्र अधि-करणपदमन्यपदार्थहेत्वधिकरणे लाक्षणिकम्, यस्येति पदं तात्पर्यग्राहकम्, भाव प्रधाननिर्देशाच्च अनधिकरणमित्यनेन हेत्वधिकरणत्वाभावलाभः, इत्थ चोद्देश्यताव्याप-कत्वमसति बाधके विधेये विधेयससर्गे वा भासते इति व्युत्पत्तिबलाद् हेत्वधिकरणत्वाभाव रूपे विधेये साध्यानधिकरणत्वार्थसाध्यनिष्ठाधेयत्वानिरूपकत्वरूपोद्देश्यतावच्छेदकव्याप-कत्वलाभ इति ।

द्वितीयलक्षणार्थमाह-**दीधितौ साध्यस्येति** । अत्रादौ साध्यस्याऽनधिकरणं सा-ध्यानधिकरणमिति तत्पुरुषः । साध्यवद्भिन्नमिति यावत्, ततः साध्याऽनधिकरणमधिकरण यस्येति बहुव्रीहिः, विग्रहाद् यन्निष्ठवृत्तितानिरूपकं साध्याऽनधिकरणमिति, समासाच्च सा-ध्यवद्भिन्नवृत्तीति बोधः, ततो भावार्थकत्वप्रत्ययात् साध्यवद्भिन्नवृत्तित्वलाभः ततो नञ्-समासः नञः साध्यानधिकरणपदोत्तरं निपातः इति साध्यानधिकरणानधिकरणत्वस्य द्विती-यलक्षणार्थबोधकत्वमिति ।

**मूले तच्चेति** । साध्यानधिकरणानधिकरणत्वं चेत्यर्थः । दीधितौ, **अप्रसिद्धेति** । अत्र साध्यनिष्ठाधेयतानिरूपकसामान्यभेदनिवेशाभिप्रायेणाऽप्रसिद्धिरभिहिता, यत्किञ्चिन्नि-रूपकभेदनिवेशे तु नानाव्यक्तिसाध्यके चेत्युक्तम् । **न क्षतिरिति** । तथाच नानाव्यक्तिसा-ध्यकहेतुत्वसामानाधिकरण्येनाऽव्याप्तिरिति भावः । नानात्वं साध्ये साध्याधिकरणे चोभयत्र वि-वक्षितमिति **गुरुचरणाः** । चकारेण केवलान्वयिसाध्यकपरिग्रहः । केचित्तु द्रव्यत्वा-द्यनुगतैकव्यक्तिसाध्यकस्यापि चकारेण परिग्रहः । एकनिष्ठनिरूपकत्वव्यक्तेरन्यत्राभावादव्या-प्तेरिति वदन्ति । वस्तुतस्तु आधेयतानिरूपकत्वस्याधेयभेदेन आधेयत्वस्यैव आधे-यभेदेन भिन्नतया एकव्यक्तिसाध्यके तदाधेयतानिरूपकत्वस्याप्यैक्याद्भेदमुक्तम् । अत एव नानाव्यक्तिक इत्युक्तं अग्रे च नानाधिकरणक इति । अन्यथाऽत्रापि नाना-धिकरणक इत्येव ब्रूयात् । सर्वत्र द्वित्वाद्यवच्छिन्नप्रतियोगिताकनिरूपकत्वाभावमादा-

विकरणव्यक्त्यन्तरस्यैत्यव्याप्तिः । क्वचिद्व्यभिचारिणि अतिप्रसङ्गश्चाद्ये ।

द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा केवलान्वयिनि, यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्वत्राऽव्याप्तिः ।

---

परिहरति क्वचिदिति । **विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरित्यर्थः । विशिष्टधर्मावच्छिन्नाधिकरणत्वस्यैव तदवच्छिन्नाधेयत्वस्याऽनतिरिक्तत्वा-दिति भावः ।** यत्किञ्चिदिति । **साध्यवत्तद्व्यक्तित्वावच्छिन्नेत्यर्थः ।** नानाधिक-रणसाध्यके इति । **यत्र साध्यतावच्छेदकावच्छिन्नाधिकरणं नाना तत्रेत्यर्थः, तेन कस्याश्चिदपि वह्निव्यक्तेर्नानाधिकरणवृत्तित्वविरहेऽपि न वह्निसाध्य-कधूमाद्यसङ्ग्रहः । सर्वत्र केवलान्वयिनि तद्भिन्ने च ।**

---

याऽसम्भवसम्भवेऽपि व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वस्याऽभावविशेषणत्वे तदसम्भ-वादव्याप्तिरित्युक्तम् । **दीधितौ ।** आद्य–आद्यलक्षणे इत्यर्थः । यद्यपि आधेयतायां साध्यता-वच्छेदकावच्छिन्नत्वानिवेशे नातिव्याप्तिः । अधिकरणतानिरूपकतावच्छेदकस्यैव आधेयताव-च्छेदकतेति नियमेन गुणानिष्ठाधिकरणतानिरूपकताऽनवच्छेदकविशिष्टसत्तात्वादेर्गुणानिरूपिता-धेयतावनच्छेदकत्वात्तथापि आधारत्वाऽऽधेयत्वयोस्तुल्यवित्तिवेद्यत्वाभावात्तादृशनियमे माना-भावः । गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतिबलात् विशिष्टसत्तात्वावच्छिन्नाधेयत्वस्या-ऽनतिरिक्तत्वं, गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इत्यप्रत्ययाद्विशिष्टाधिकरणताया एवातिरि-क्तत्वमित्याशयादिति भावः ।

नच तथापि साध्यतावच्छेदकं यन्निष्ठाधिकरणतानिरूपकतानवच्छेदकं तत्त्वव्यापकत्वो-क्तौ नातिव्याप्तिरिति वाच्यम् । यत्त्वतत्त्वाननुगमेन व्याप्तेर्विशिष्टैकार्थरूपत्वाभावात् । अधि-कमग्रे वक्ष्यामः ।

**दीधितौ** साध्यवद्भिन्ने साध्यवद्भिन्नत्वावच्छेदेन । अवच्छेदकत्वं व्यापकत्वम् । अनेनो-क्तनिष्कर्ष एवोक्तः, यथाश्रुतेऽति प्रसङ्गात् , तथाच साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदो यदि साध्यवैयधिकरण्यघटकतया विवक्षित इति समुदायार्थः । केवलान्वयिनीतिपदं सावधारणम् , साध्यवत्तद्व्यक्तित्वावच्छिन्नेत्यर्थ इति, तेन नाऽसम्भवे इति शेषः ।

अथ सर्वत्रेति पदं किमर्थं, न च तदनुक्तौ केवलान्वयिभिन्ने एव नानाधिकरणकसा ध्यकेऽव्याप्तिरिति भ्रमः स्यादिति वाच्यम् , एवंसति नानाव्यक्तिके इति पूर्वग्रन्थेऽपि सर्व-त्रेति वक्तव्यं स्यात् इति चेन्न । नानाव्यक्तिसाध्यके चेति चकारेण केवलान्वयिनोपि समुच्च-येन न्यूनताविरहात् । नन्वत्रापि सर्वत्रेतिस्थाने चकारं पठित्वा केवलान्वयिसाध्यकसमुच्चयः कुतो न कृतः वैरूप्यस्याऽन्याय्यत्वादिति चेन्न । उपायस्य उपायान्तरादूषकत्वात् । अथ नाना-व्यक्तिकेत्यस्य स्थाने नानाधिकरणकेति कथं नोक्तमिति चेन्न । पूर्वलक्षणे साध्याधिकरणे नानात्वं नाव्याप्तिप्रयोजकं, किन्तु साध्ये नानात्वमित्याशयेन पूर्वं नानाव्यक्तिसाध्यके इत्यु-क्तमिति संक्षेपः ।

केचित्तु साध्याऽसामानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्तदधिकरणाभिन्नत्वमर्थः ।

तेन धूमस्य स्वावयवे संयोगेन वह्निमति च समवायेनाऽवृत्तावपि न क्षतिः ।

---

**सार्वभौममतमुत्थापयति** केचित्त्विति । **हेत्वधिकरणे इति सप्तम्यर्थोऽवच्छेद्यत्वं, तच्च साध्यवद्वृत्तित्वाऽभावेऽन्वितम्** । तेनैवेति । **हेतुतावच्छेदकसम्बन्धेनैवेत्यर्थः । तस्य च साध्यवद्वृत्तित्वेन सहाऽन्वयः ।**

**साध्यवत्त्वमपि येन सम्बन्धेन येन रूपेण साध्यता तत्सम्बन्धेन तद्रूपावच्छिन्नवत्त्वं बोध्यम्, तेन समवायेन वह्नेः साध्यत्वे धूमे, विशिष्टसत्त्वसाध्यके सत्तादौ नातिव्याप्तिः** । तदधिकरणाभिन्नत्वमिति । **तदन्यत्वा-**

---

साध्यासामानाधिकरण्यानधिकरणत्वमित्यत्र साध्यासामानाधिकरण्यपदेन साध्याधिकरणवृत्तित्वाभावत्वविवक्षणे द्रव्यं सत्त्वादित्यादावतिव्याप्तिः स्यादतः स्वयं प्रथमलक्षणमुक्तरीत्या व्याख्यातवान् । **सार्वभौमास्तु** सामानाधिकरण्यस्याऽव्याप्यवृत्तितया सत्तादौ द्रव्यत्वसामानाधिकरण्याभावस्यापि गुणावच्छेदेन सत्त्वान्नातिव्याप्तिरिति वदन्ति, तन्मतं दूषयितुमुपन्यस्यति **केचित्त्वितीति** । वन्हिमान् धूमादित्यादौ स्वावयवावच्छेदेन धूमे वह्निसामानाधिकरण्याभावसत्त्वादव्याप्तिरतो हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे इत्युक्तम् । हेतुतावच्छेदकसम्बन्धेन यत्किञ्चित्पदार्थवदित्युक्तौ संयोगेन शैवालादिमद्ध्रदावच्छेदेन तृणादिमत्स्वावयवावच्छेदेन च धूमे वह्निसामानाधिकरण्याभावसत्त्वादुक्ताऽव्याप्तिस्तदवस्थ्यमतो हेतुपदम् । अत्र नञ्द्वयाऽप्रवेशे धूमवान् वन्हेरित्यादौ हेत्वधिकरणपर्वतावच्छेदेन साध्यवद्वृत्तित्वस्य हेतौ सत्त्वादतिव्याप्तिः । नञ्द्वयप्रवेशस्तु व्यापकत्वपर्यायः, तथा च हेत्वधिकरणावच्छेद्यत्वस्य अभावांशेऽन्वयात् हेत्वाधिकरणविशिष्टान्यत्वं हेतौ व्याप्तिः पर्यवसिता । वै० स्वावच्छेद्यसाध्यवद्वृत्तित्वाभावाधिकरणत्वसम्बन्धेन उक्तस्थले च अयोगोलकात्मकाधिकरणविशिष्टत्वादेवाऽतिव्याप्तिविरहादिति ध्येयम् । **अभावेऽन्वितमिति** । यद्यप्येवमपि अधिकरणभेदेनाऽभावभेदाभावमते पर्वताद्यवच्छिन्नो यो रूपादिवृत्तिर्वह्निमत्संयुक्तत्वाभावः स एव स्वावयवावच्छेदेन धूमादावपि वर्त्तत इति तादृशाभावाऽनधिकरणत्वं दुर्घटं, तथापि हेत्वाधिकरणावच्छिन्नविशेषणतया साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं तदन्यत्वे तात्पर्यादिति । केचित्तु तादृशहेत्वधिकरणाऽवच्छिन्नत्वविशिष्टाभावाऽनधिकरणत्वस्यैव विवक्षणीयतया न दोषः । रूपे पर्वते न वह्निमत्संयुक्तत्वमिति वत् धूमे पर्वते न वह्निमत्संयुक्तत्वमिति प्रतीत्यनुदयात् । अभावाधिकरणतायामेव वाऽधिकरणविशेषावच्छिन्नत्वं निवेशनीयम्, यथा रूपनिष्ठाया तादृशाभावाधिकरणतायां धूमावयवो नावच्छेदकस्तथा धूमनिष्ठतदधिकरणतायां पर्वतो नाऽवच्छेदक इति प्राहुः ।

**हेतुतावच्छेदकसम्बन्धेनैवेति** । तृतीयार्थोऽवच्छिन्नत्वम् । **तस्य चेति** । तृतीयान्तार्थहेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य चेत्यर्थः ।

साध्यतावच्छेदकसम्बन्धेन साध्यवत्तानिवेशस्य फलमाह—**तेनेति** । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेनेत्यर्थः, तथाच समवायेन वह्नौ साध्ये संयोगेन धूमे हेतौ धूमे सं-

भाववत्त्वोक्तौ द्रव्यं सत्त्वादित्यादावतिव्याप्तिः, गुणावच्छेद्यद्रव्यवृत्तित्वाभावस्यैव द्रव्यावच्छेदेन सत्तायामभावसत्त्वादतो भिन्नत्वपर्यन्तानुसरणम्। भेदस्तु नाऽव्याप्यवृत्तिः, तदव्याप्यवृत्तित्वे तु तादृशवृत्तित्वाभाववती यावती व्यक्तिस्तत्तद्भेदकूटवत्त्वं वक्तव्यमिति भावः।

हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे इत्यस्य फलमाह स्वावयवे संयोगेनेति। अवृत्तावपि न क्षतिरित्यन्वयः। तथाच तादृशसम्बन्धेन हेत्वधिकरणत्वाऽप्रवेशे स्वावयवावच्छेदेन धूमस्य वह्निमत्संयुक्तत्वाभाववत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः स्यान्न पुनरसम्भवः, इदं वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिनि लक्षणसम्भवादिति भावः।

अत्र चोत्पत्तिकालावच्छिन्ने घटे पृथिवीत्वे रूपवद्वृत्तित्वं नेति प्रतीत्या घटाद्यवच्छेदेन पृथिवीत्वादौ रूपवद्वृत्तित्वाभावाभ्युपगमे हेत्वधिकरणनिष्ठमवच्छेदकत्वं निरवच्छिन्नं ग्राह्यम्, तेन रूपवान् पृथिवीत्वादित्यादौ नाऽव्याप्तिः, तत्र घटनिष्ठाऽवच्छेदकत्वस्योत्पत्तिकालेनाऽवच्छेद्यादिति ध्येयम्।

---

योगेन धूमाधिकरणपर्वतावच्छेदेन संयोगेन वह्निमद्वृत्तित्वसामान्याभावाऽसत्त्वेऽपि समवायेन वह्निमद्वृत्तित्वसामान्यभावसत्त्वान्नातिव्याप्तिरिति भावः। अतिव्याप्तिश्च सम्बन्धसामान्येन साध्यवत्तानिवेशाभिप्रायेण बोध्या। न च तथापि वह्न्यवयवे धूमान्तरसंयोगसम्भवात् साध्यतावच्छेदकसमवायसम्बन्धेन साध्यवन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य धूमान्तरेऽसत्त्वादतिव्याप्तिरिति वाच्यम्। यत्र वह्न्यवयवे न धूमसंयोगस्तत्र तादृशाभावस्य पर्वतावच्छेदेन सौलभ्यात्, अन्यथा व्यभिचारित्वाऽनुपपत्तेरिति ध्येयम्। यत्किञ्चित्सम्बन्धेन साध्यवत्त्वनिवेशे वह्निमान् धूमादित्यादौ समवायात्मकयत्किञ्चित्सम्बन्धेन यः साध्यवान् तद्वृत्तित्वाभावस्य स्वाधिकरणावच्छेदेन धूमे सत्त्वादव्याप्तिर्बोध्या।

**लक्षणसम्भवादितीति।** केनापि सम्बन्धेन ज्ञेयत्वाधिकरणाऽवच्छेदेन वाच्यत्ववद्वृत्तित्वाभावस्य ज्ञेयत्वहेतावसत्त्वेनेति शेषः। यद्यपि हेतुतावच्छेदकसम्बन्धनिवेशेऽपि धूमादौ उत्पत्तिकालावच्छेदेन वह्न्यधिकरणनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावसत्त्वादव्याप्तितादवस्थ्यम्। न च तादृशवृत्तित्वाभावे उत्पत्तिकालनिष्ठाऽवच्छेदकतानिरूपकत्वसत्त्वेऽपि हेत्वधिकरणनिष्ठाऽवच्छेदकतानिरूपकत्वविरहान्न दोष इति वाच्यम्। पर्वतादेरपि कालोपाधितया तादृशाभावावच्छेदकत्वात्। तथापि इदानीं धूमे न वह्निमत्संयुक्तत्वमिति प्रत्ययात् पर्वते धूमे न वह्निमत्संयुक्तत्वमित्यप्रत्ययाच्च इदानीमिति प्रतीतिनियामककालनिष्ठावच्छेदकतातः इहेति प्रतीतिनियामकदेशनिष्ठाऽवच्छेदकताया भेदो वाच्यः, अत्र धूमनिष्ठसाध्यसामानाधिकरण्याभावीया देशविधया अवच्छेदकता तदीयकालविधयाऽवच्छेदकतातो विलक्षणा कालत्वाविषयकप्रमाविषयधूमनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकतात्वादित्यनुमानं वैलक्षण्यसाधकं, तेन पर्वते धूमे न वह्निमत्संयुक्तत्वमिति प्रत्ययाऽसिद्धावपि न क्षतिः, तथाच हेत्वधिकरणनिष्ठावच्छेदकतानिरूपकत्वविरहान्न दोष इति।

तादृशाभावश्च सम्बन्धान्तरेण तत्रैव वर्त्तमाने सुलभः ।

---

तेनैवेत्यस्य फलमाह वह्निमति च समवायेनेति । हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वानुक्तौ सम्बन्धसामान्येन हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वसामान्याभावो न निवेश्यः साधनाधिकरणावच्छेद्यतादृशाभावस्याऽप्रसिद्धेः, किन्तु यत्किञ्चित्सम्बन्धेन साध्यवद्वृत्तित्वाभावः प्रवेशनीयः, तथाच हेत्वधिकरणपर्वताद्यवच्छेदेन धूमादौ वह्निमत्समवेतत्वाभावसत्त्वादसम्भव एव स्यात् यदि तेनैव सम्बन्धेन साध्यवद्वृत्तित्वप्रवेशो न स्यादिति भावः ।

ननु हेत्वधिकरणावच्छेद्यत्वविशिष्टस्य साध्यवद्वृत्तित्वाभावस्याऽधिकरणाऽप्रसिद्ध्या लक्षणमिदमसम्भवि तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकतया गगनजलत्वादौ वह्निमत्पर्वतसंयुक्तत्वाभावस्य धूमवत्पर्वतानवच्छेद्यत्वादत आह तादृशाभावश्चेति । हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभावश्चेत्यर्थः । सम्बन्धान्तरेण-हेतुतावच्छेदकसम्बन्धान्यसम्बन्धेन, तथाच हेतुमत्पर्वतावच्छेद्यत्वविशिष्टस्य वह्निमत्संयुक्तत्वाद्यभावस्याधिकरणत्वं पर्वतीयरूपादाविव प्रसिद्धमिति भावः ।

यद्यपि रूपादौ वह्निमत्संयुक्तत्वाद्यभावस्य व्याप्यवृत्तित्वात् तत्र पर्वतादिकं नावच्छेदकं भावाभावयोरेकत्र वृत्त्यर्थमेवाऽवच्छेदकभेदस्वीकारादित्यप्रसिद्धितादवस्थ्यम् । न च महानसादिसंयुक्ते कालिकादिसम्बन्धेन पर्वतादिनिष्ठघटादौ वह्निमत्संयुक्तत्वाभावस्य पर्वतावच्छेद्यत्वप्रसिद्ध्या न दोष इति वाच्यम । इत्थमपि एतद्रूपवान् एतद्रसादित्यादौ एतद्रसाधिकरणावच्छेदेन एतद्रूपसमवेतत्वाऽभावस्याऽप्रसिद्धेर्दुर्वारत्वात् । तथापि

---

केचित्तु कालोपाधेरवच्छेदकताया कालिकसम्बन्धोऽवच्छेदकतानियामकः, इत्थञ्च तादृशसम्बन्धानवच्छिन्नत्वमेव देशस्याऽवच्छेदकताया वैलक्षण्यम , अन्यस्य दुर्वचत्वात् ।

अत्र केचिदधिक्षिपन्ति । न च हेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणावच्छेद्यसाध्योपलक्षितअधिकरणनिरूपितवृत्तित्वाभाववत्त्वमेव लक्षणे निवेश्यम्, अन्यथ वह्निप्रागभावे वह्निविशिष्टनिरूपितवृत्तित्वाभावस्य सत्त्वाद् वह्निमान् प्रागभावादित्यादावव्याप्तिः स्यात् , एव च साध्यविशिष्टनिरूपितवृत्तित्वाभावस्य पृथिवीत्वादौ सत्त्वेपि साध्योपलक्षितनिरूपितवृत्तित्वाभावविरहेण कथमुक्ताऽव्याप्तिरिति निरवच्छिन्नत्वं विफलमिति वाच्यम् । साध्योपलक्षिताधिकरणनिरूपितवृत्तित्वाभावस्य निवेशेपि वह्निमान् वह्निप्रागभावादित्यादौ प्रागभावस्य सामग्र्या नाश्यत्वाद् वह्न्यधिकरणकालावच्छेदेन वह्न्यवयवे वह्निप्रागभावविरहेण एवं द्वितीयक्षणावच्छेदेनापि वह्न्युपलक्षितनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वाद् , अनयैव रीत्या रूपवान् रूपप्रागभावादित्यादावव्याप्तिवारणाय निरवच्छिन्नत्वं देयम् ।

**दीधितौ** । तत्रैव-तादृशहेतुमत्येव । **दुर्वारत्वादिति** । एतद्रसादिमति सम्बन्धान्तरेण वर्त्तमाने साध्यवत्समवेतत्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणावच्छिन्नत्वविरहेण इत्यर्थः ।

पर्वतावच्छेदेन तदीयरूपे न वह्निमत्संयुक्तत्वमित्यादिप्रतीत्या व्याप्यवृत्तेरवच्छेदकत्वस्वीकारादित्थमभिधानम् ।

हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याऽधिकरणं हेत्वधिकरणं तदन्यत्वे वा ग्रन्थतात्पर्यम् । तथाच व्याप्यवृत्तेरवच्छेदकत्वाऽसत्त्वेपि साध्यवद्वृत्तित्वाभावविशिष्टस्य तस्याधिकरणत्वमादायैव लक्षणसङ्गतिः ।

न च वस्तुगत्या साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणं हेत्वधिकरणं तदन्यत्वोक्तौ वह्निमान् धूमादित्यादावव्याप्तिः, स्वावयवावच्छेदेन वह्निमत्संयुक्तत्वाभाववतो धूमस्याधिकरणतायाः साधनवत्पर्वतादौ सत्त्वात् , साध्यवद्वृत्तित्वाभावविशिष्टयद्व्यक्तित्वावच्छिन्नाधिकरणत्वं हेतु-

---

अथोक्तरीत्या महानसादिमात्रनिष्ठे कालिकेन पर्वतवृत्तिधूमादौ पर्वतावच्छेदेन वह्निमत्संयुक्तत्वाभावसत्त्वाद् वह्निमान् धूमादित्यत्राऽव्याप्तिसम्भवे एतद्रूपवान् एतद्रसादित्याद्यनुधावनमयुक्तमिति चेन्न । हेतुतावच्छेदकसम्बन्धेन स्वाधिकरणावच्छेदेन साध्यवद्वृत्तित्वाभावानधिकरणत्वं स्वनिष्ठा व्याप्तिरिति विवक्षयापि तत्राव्याप्तिवारणसम्भवात् । न च स्वत्वाऽननुगमः, स्वतादात्म्य–स्वाधिकरणावच्छेदेन साध्यवद्वृत्तित्वाभावाऽधिकरणत्वोभयसम्बन्धेन हेतुविशिष्टत्वस्य विवक्षितत्वादिति ।

केचित्तु अवच्छिन्नत्व–हेत्वधिकरणावच्छिन्नत्वाभाव एतदुभयाभाववत्त्वमेव हेत्वधिकरणावच्छेदेनेत्यनेन विवक्षणीयम् । एवं च व्याप्यवृत्तेरवच्छेदकत्वाऽस्वीकारेऽपि न क्षतिः, तथाच तादृशोभयाभाववदधिकरणतावदन्यत्वमेव निवेशनीयम्, पर्वतीयरूपादिनिष्ठवह्निमत्सयुक्तत्वाभावाधिकरणतायां अवच्छिन्नत्वविरहेणोभयाभावसत्त्वादिति वदन्ति । तन्न । अवृत्तावेव सर्वत्र तादृशाभावप्रसिद्ध्या सम्बन्धान्तरेण वर्त्तमानपर्यन्तानुधावनवैयर्थ्यात् ।

एतेन धूमान्तरसंयुक्तस्वावयवावच्छेदेन वह्निमत्सयुक्तत्वाभाववति धूमेऽव्याप्तिवारणाय हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणावच्छेदेनेत्यस्य हेतुतावच्छेदकसम्बन्धेन स्वविशिष्टस्य यद्यदधिकरणं तदनवच्छिन्ना अवच्छिन्ना च या या अधिकरणता तद्भिन्नत्वेन साध्यसामानाधिकरण्याऽभावाऽधिकरणता विशेषणीया इत्यत्र तात्पर्यम् , तथाच हेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरणं तदनवच्छिन्ना या या ( स्वात्मिका ) अधिकरणता तदन्या या साध्यसामानाधिकरण्याभावाधिकरणता तद्वद्भिन्नत्वं हेतौ व्याप्तिरित्यर्थः । स्वपदं अन्यत्वप्रतियोग्यधिकरणतापरम् । वह्निमान्धूमादित्यादौ व्यभिचारिहेतुनिष्ठाऽव्याप्यवृत्तिसाध्यसामानाधिकण्याभावाधिकरण्याभावाधिकरणतायाः तादृशव्याप्यवृत्तिसाध्यसामानाधिकरण्याभावाधिकरणतायाश्च सङ्ग्रहाय अनवच्छिन्नेति अवच्छिन्नेति च अधिकरणताविशेषणम् । एवं च रूपनिष्ठाधिकरणतापि स्वविशिष्टधूमाधिकरणपर्वताद्यनवच्छिन्नधूमनिष्ठधूमावयवावच्छिन्नाधिकरणताभिन्ना लभ्यते, तथाहि स्वं धूमादिनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणता तदनुयोगिनो धूमादेः संयोगेनाधिकरणं पर्वतादि तदनवच्छेद्या स्वावयवावच्छेद्या सैव तद्भेदकूटवती च रूपादिनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतैवेति, हेतोश्च तद्वद्भिन्नत्वाल्लक्षणसमन्वयः । तद्विशिष्टस्य हेतुतावच्छेदकसम्बन्धेनाऽधिकरणाऽप्रसिद्ध्या स्वपदेन रूपनिष्ठता-

**मतस्तदन्यत्वोक्तौ वह्निमान् धूमात् इदं वाच्यं ज्ञेयत्वादित्यादौ सर्वत्रैवाऽसम्भवः, साध्यवदसंयुक्तत्वादिविशिष्टतत्तद्रूपादिव्यक्तित्वस्य गुरुतया प्रमेयरूपत्वावच्छिन्नप्रतियोगिताया इव तदवच्छिन्नाधिकरणत्वाऽप्रसिद्धेः, केवलस्याऽतिप्रसङ्ग एव विशिष्टधर्मस्याऽधिकरणतानिरूपकतावच्छेद-**

---

दृशाभावाधिकरणतया उपादानाऽसम्भवादिति व्याप्त्यनुगमेऽस्मत्कृतेऽस्वीकारेऽपि न दोष इति निरस्तम् ।

न चोक्ताऽव्याप्तिः कथं वारणीयेति वाच्यम् । हेत्वधिकरणे इत्यत्र हेतुपदस्य अधिकरणभिन्नत्वाऽनुयोगितत्तद्धेतुपरत्वात् । यद्यपि स्वावयवाऽसंयुक्तधूमादौ तादृशाभावानधिकरणत्वसम्भवाद्धेतुपदस्य तत्तद्धेतुपरत्वं न युक्तम्, तथापि धूमवान् वह्नेरित्यादौ पर्वतीयवह्नौ तादृशाभावाऽनधिकरणत्वमादायाऽतिव्याप्तिवारणाय हेतुतावच्छेदकावच्छेदेन तदनधिकरणत्वविवक्षणाऽवश्यकत्वाद् युक्तं तत्तद्धेतुपरत्वं हेतुपदस्य ।

अत एव हेतुपदं हेतुतावच्छेदकावच्छिन्नपरमेव हेतुतावच्छेदकविशिष्टस्य हेतुतावच्छेदकसम्बन्धेन अधिकरणैरनवच्छिन्नं अवच्छिन्नं च यत् साध्यसामानाधिकरण्यं तदधिकरणतद्वृत्तिभिन्नत्वस्य लक्षणतया नोक्तरीत्याऽव्याप्तिः, नवाऽननुगम इति नवीनोक्तमपि चिन्त्यमेव । एवं सति सम्बन्धान्तरेण वर्तमानपर्यन्तानुधावनवैयर्थ्यादिति दिक् ।

**असम्भव इति ।** अत्रापत्तिरियम् ननु साध्यवद्वृत्तित्वाभावस्य रूप इव महानसवृत्तिघटेऽपि वर्त्तमानत्वात् तादृशघटाधिकरणतानिरूपकतावच्छेदकं न घटत्वमात्रं घटत्वावच्छिन्नाधिकरणतायाः महानसेऽपि सत्त्वादतिप्रसङ्गापातात्, किन्तु वह्निमद्वृत्तित्वाभावविशिष्टघटत्वमेव, तथाच वह्निमद्वृत्तित्वाभावविशिष्टघटत्वावच्छिन्नाधिकरणतायाः प्रसिद्धत्वेन वह्निमान् धूमादित्यादौ लक्षणसम्भवे कथमसम्भव इति । न च जन्यमात्रस्य कालोपाधित्वमनङ्गीकृत्यैवोक्तमिति वाच्यम् । संयोगसामान्येन वह्नेः साध्यतायां वह्निमन्निरूपितसंयोगेन धूमस्य हेतुतायां तत्र साध्यवन्निरूपितसंयुक्तत्वाभावस्य महाकालावच्छेदेन कालिकसम्बन्धेन महाकाले वर्त्तमाने महानसमात्रसंयुक्तघटे सत्त्वाद्वह्निमान् धूमादित्यादौ लक्षणगमनसम्भव इति । **अत्र केचित् ।** तत्र वैशिष्ट्यावच्छिन्नघटनिष्ठनिरूपकताकाधिकरणतास्वीकारेणैवोपपत्तौ तादृशविशिष्टघटत्वावच्छिन्नाधिकरणताया मानाभावात्तत्सङ्गतिरित्याहुः ।

ननु तथापि साध्यवद्वृत्तित्वाभावविशिष्टयन्निष्ठनिरूपकताकाधिकरणं तदन्यत्वस्य हेतौ निवेशे तादृशवृत्तित्वाभावविशिष्टरूपत्वावच्छिन्नाधिकरणत्वाऽस्वीकारेऽपि न क्षतिः साध्यवद्वृत्तित्वाभावविशिष्टधूमाधिकरणताया हेत्वधिकरणेऽसत्त्वान्न वा वह्निमान् धूमादित्यादौ अव्याप्तिश्चेति चेन्न । कालिकेन धूमाधिकरणावच्छेदेन धूमे वह्निमद्वृत्तित्वाभावस्यैव पर्वतावच्छेदेन रूपादिवृत्तिवह्निमत्संयुक्तत्वाभावात्मकतया एकधर्मावच्छिन्ननिरूपकताया ऐक्यमते वह्निमद्वृत्तित्वाभाववैशिष्ट्यावच्छिन्ननिरूपकतायाः धूमादिनिष्ठायाः एकस्याः कालिकसम्बन्धावच्छिन्ननिरूपकातायाः स्वीकारादिति साध्यवद्वृत्तित्वाभाववैशिष्ट्यावच्छिन्नधूमनिष्ठनिरूपकताकाधिकरणतायाः पर्वते सत्त्वात् यत्पदेन धूमव्यक्तेर्धर्तुं शक्यतया अव्याप्तिप्रसङ्गादिति ध्येयम् ।

अथैतत्कल्पे हेत्वधिकरणावच्छेदेनेत्यनुक्तौ स्वावयवावच्छेदेन वह्निमत्संयुक्तत्वाभावविशिष्टधूमाधिकरणं हेत्वधिकरणं तदन्यत्वस्य हेतावसत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिः ।

**कत्वकल्पनादिति वाच्यम्। सार्वभौमानां मते प्रतियोगिताया इवाऽधिकरणताया अपि गुरुधर्मावच्छेद्यत्वोपगमात्, अन्यथा समवेतत्वत्वादिकमपेक्ष्य सत्तावत्समवेतत्वत्वस्य गुरुतया साध्यवद्वृत्तित्वत्वावच्छिन्नप्रति-**

---

न च तादृशविशिष्टधूमाधिकरणं हेतुमतोऽसत्त्वादिति वाच्यम्। कालिकेन तद्विशिष्टधूमाधिकरणत्वस्य हेतुमति सत्त्वे बाधकाभावादिति चेत्। **अत्र केचित्**। साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणतायां हेतुतावच्छेदकातिरिक्तसम्बन्धावच्छिन्नत्वहेतुतानिरूपितत्वोभयाभाववत्त्वं विवक्षणीयम्, प्रथमदलानुपादाने प्रागुक्ताव्याप्तिः। तथाच सम्बन्धान्तरावच्छिन्नतादृशधूमाधिकरणतायां धूमनिरूपितत्वसत्त्वेन निरुक्तोभयोः सत्त्वान्नाव्याप्तिरित्याहुः। तन्न। द्रव्यत्वादिसाध्यकसत्तात्वावच्छिन्नाधिकरणतासम्बन्धेन सत्ताहेतावतिव्याप्त्यापत्तिः, तथाहि-सत्तात्वपर्याप्तावच्छेदकताकाधिकरणत्वसम्बन्धेन द्रव्यत्ववद्वृत्तित्वाभावविशिष्टसत्ताधिकरणत्वाप्रसिद्धेः, सम्बन्धान्तरावच्छिन्नस्य सत्तात्वावच्छिन्नाधिकरणत्वस्य तादृशोभयाभावाऽसत्त्वेन तदन्यत्वस्य हेतौ सत्त्वादिति ध्येयम्।

यत्तु साध्यवद्वृत्तित्वाभावविशिष्टस्य धूमस्याऽधिकरणत्वं पर्वतादौ नास्त्येव, विशिष्टाधिकरणत्वस्य अतिरिक्तत्वादिति। तच्चिन्त्यम्। अनुभवेनाऽविपर्यीकरणात्।

ननु रूपवान् पृथिवीत्वादित्यादौ अव्याप्तिः, तथाहि—उत्पत्तिकालीनघटे पृथिवीत्वे रूपवद्वृत्तित्व नेति प्रतीत्या उत्पत्तिकालावच्छिन्नघटावच्छेदेन रूपवद्वृत्तित्वाभावविशिष्टपृथिवीत्वाधिकरणत्वस्यैव हेत्वाधिकरणपृथिव्यां सत्त्वात्, तदन्यत्वं न पृथिवीत्वहेतावस्तीति। न च साध्यवद्वृत्तित्वाभावे हेत्वधिकरणानिष्ठानिरवच्छिन्नावच्छेदकतानिरूपकत्वं देयमिति वाच्यम्। व्याप्यवृत्तेरवच्छेदकत्वास्वीकारे एतत्कल्पस्य प्रणयने पुनर्हेत्वाधिकरणावच्छेदेनेत्युक्तौ प्रागुक्ताऽप्रसिद्धितादवस्थ्यात् उन्मत्तप्रलपितत्वापत्तेरिति चेन्न।

किञ्चिद्धर्मावच्छिन्नावच्छेदकत्वानिरूपकत्वस्य साध्यवद्वृत्तित्वाभावे विवक्षितत्वात्। न च यद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य साध्यवद्वृत्तित्वाभावाधिकरणतायां निवेशे उक्ताऽव्याप्तिवारणेपि वृत्तित्वसाध्यकअग्रावच्छेदेन तत्कपिसंयोगहेतुकस्थलेऽव्याप्तिर्दुर्वारैव मूले एतत्कपिसंयोगे न वृत्तित्वसामानाधिकरण्यमिति प्रतीत्या मूलावच्छेदेन एतत्कपिसंयोगे किञ्चिद्धर्मावच्छिन्नावच्छेदकत्वानिरूपकतायाः सत्त्वादिति वाच्यम्। किञ्चिद्धर्मानवच्छिन्नहेत्वधिकरणनिष्ठावच्छेदकत्वानिरूपकत्व—अवच्छेदकत्वानिरूपकत्वोभयाभावस्य साध्यवद्वृत्तित्वाभावाधिकरणतायां निवेशात्, मूलावच्छेदेन तादृशवृत्तित्वाभावाधिकरणतायां निरुक्तोभयोः सत्त्वान्नातिव्याप्तिरिति।

अथ वस्तुगत्या साध्यवद्वृत्तित्वाभावविशिष्टो यस्तदधिकरणानिवेशे स्वावयवावच्छेदेन साध्यवद्वृत्तित्वाभावविशिष्टो यो धूमस्तदधिकरणतामादाय वह्निमान् धूमादित्यादावव्याप्तिरिति जगदीशग्रन्थाऽसङ्गतिः, धूमनिष्ठतादृशाधिकरणतायां निरुक्तोभयोः सत्त्वादिति चेन्न। वह्निमान् धूमादित्यादौ पर्वतावच्छेदेन महानसीयधूमे निरुक्तोभयाभाववत्साध्यवद्वृत्तित्वाभावाधिकरणतायां चत्वरावच्छेदेन पर्वतीयधूमे तादृशाधिकरणतायां च सत्त्वादव्याप्तिवारणाय साध्यवद्वृत्तित्वाभावविशिष्टस्य यस्याधिकरणतायां हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्व-

व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्त्व सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यनुभवात् । न चैवं गुणकर्मान्यत्वविशिष्टसत्त्वेऽव्याप्तिः, विशिष्टस्याऽतिरिक्तत्वात्, अनतिरिक्तत्वे तु विशेषणविशेष्यसम्बन्धस्यैव परंपरया व्याप्तत्वात् ।

---

योगिताकाभावाऽप्रसिद्ध्या सत्तावान् द्रव्यत्वादित्यादावव्याप्तिप्रसङ्गात् ।

**ननु साध्यसामानाधिकरण्यवतो न तदभाववत्त्वं, अतो द्रव्यं सत्त्वादित्यादौ व्यभिचारिण्यतिप्रसङ्ग इत्यत आह** व्यभिचारिणस्त्विति । तादृशीति । **हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थः । तादृशाभाववत्त्वं-साध्यवद्वृत्तित्वाभाववत्त्वम् । अत्रैवानुभवं प्रमाणयति** सत्तायामित्यादि । **एवं-सत्तायामपि द्रव्यत्वसामानाधिकरण्यविरहे ।** विशिष्टसत्त्वे इति । **विशिष्टसत्त्वशब्दप्रतिपाद्यहेतावित्यर्थः । यथाश्रुते गुणकर्मान्यत्वविशिष्टसत्ताव्यक्तौ अव्याप्त्याशङ्कायामुत्तरग्रन्थेन तदनिरासादसङ्गत्यापत्तेः ।** अतिरिक्तत्वादिति । **विशेष्यविशेषणाभ्यां भिन्नत्वादित्यर्थः, तथाच गुणादिकं न हेत्वधिकरणमतो नाऽव्याप्तिः ।**

---

हेतुनिरूपितत्वोभयाभावस्य निवेशनीयत्वात्, तथाच पर्वतावच्छेदेन साध्यवद्वृत्तित्वाभावविशिष्टस्य धूमस्याधिकरणतायाश्चत्वरे स्वीकारात्, कालिकसम्बन्धावच्छिन्नाधिकरणतया च निरुक्तोभयाभावासत्त्वात् धूमाधिकरणताया धर्तुमशक्यत्वान्नाव्याप्तिः । इत्थं चैतल्लक्षणविधया निवेशे पर्वतावच्छेदेन वह्निमद्वृत्तित्वाभावविशिष्टो यो महानसीयधूमस्तद्व्यक्त्यधिकरणताया महानसे सत्त्वात् वह्निमान् धूमादित्यादावव्याप्तिरतस्तादृशवृत्तित्वेन निवेश इति नास…रित्याहुः ।

साध्यवद्वृत्तित्वाभावविशिष्टव्यक्त्यधिकरणतापि हेतुतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वहेतुनिरूपितत्वोभयाभाववती ग्राह्या, अन्यथा वह्निमान् धूमादित्यादावव्याप्तिस्तथाहि स्वावयवावच्छेदेन वह्निमद्वृत्तित्वाभावविशिष्टधूमत्वावच्छिन्ननिरूपितकालिकसम्बन्धावच्छिन्नाधिकरणतायाः धूमवत्पर्वते सत्त्वात् । न च कालिकसम्बन्धावच्छिन्नाधिकरणतापि अतिरिक्तैवेति वाच्यम्, तथाच यदवच्छेदेन साध्यवद्वृत्तित्वाभाववैशिष्ट्यं कालिकसम्बन्धेनापि विशिष्टनिरूपकताकाधिकरणत्वं तस्यैवेति वाच्यम् । तत्सम्बन्धावच्छिन्नवृत्तित्वाभावविशिष्टस्य तत्सम्बन्धेनैवाऽतिरिक्तत्वात्, सम्बन्धान्तरेण तस्य सत्त्वे बाधकाभावात्, हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणत्वस्य च सत्तावान् जातेरित्यादावप्रसिद्धिभयेन निवेशाऽसम्भवादित्याहुः ।

**हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थ इति ।** सप्तम्यर्थोऽवच्छेदकत्वम् । **साध्यवद्वृत्तित्वाभाववत्त्वमिति ।** हेतुतावच्छेदकसम्बन्धेनेति शेषः । सार्वभौमेनाऽपि विशिष्टाधिकरणताया अतिरिक्तत्वमवश्यमभ्युपेयम्, अन्यथा सत्ताधिकरणताया एवं विशिष्टसत्ताधिकरणतात्वे गुणे विशिष्टसत्तावानिति प्रत्ययापत्तेः, सत्ताधिकरणत्वस्य गुणे विद्यमानत्वादित्यत आह दीधितौ **विशिष्टस्येति । तथाचेति ।** भिन्नत्वे चेत्यर्थः । **नाव्याप्तिरिति ।** तथाच विशिष्टसत्त्वं द्रव्यमात्रवृत्ति तदधिकरणत्वं न गुणादेरिति न हेत्वधिकरणावच्छेदेन हेतौ साध्यसामानाधिकरण्याभावत्वमतो नाव्याप्तिरिति भावः ।

नतु हेतुतावच्छेदकावच्छिन्नाधिकरणतानिवेशे आवश्यकः, अन्यथा स्पर्शवान् भूतत्वम्-

उभयत्वमपि एकविशिष्टापरत्वमेव तच्चाऽतिरिक्तमेव, नातः स्पर्शवान् मूर्त्तत्वभूतत्वोभयस्मादित्यादावव्याप्तिरिति भावः।

यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेनेत्युक्तावपि विशिष्टसत्तादौ नाऽव्याप्तिः। न च धूमाधिकरणमहानसाद्यवच्छेदेन पर्वतीयादिधूमे वह्निमत्संयुक्तत्वाभावस्य चालनीन्यायेन सत्त्वादव्याप्तिः, महानसादेरपि कालिकादिसम्बन्धेन पर्वतीयधूमाधिकरणत्वात् तत्र साध्यवद्वृत्तित्वाभाववत्तायामवच्छेदकत्वादिति वाच्यम्। स्वावच्छिन्नाधिकरणावच्छेद्यसाध्यवदवृत्तिधर्मवत्त्वमित्यस्यैव फलितार्थस्य तत्तद्धूमत्वधर्ममादायैव धूमादौ लक्षणसम्भवेन धूमत्वस्य हेतुतावच्छेदकत्वेऽपि क्षत्यभावात्। तथापि विशिष्टस्याऽतिरिक्तत्वात्तत एवाऽव्याप्तिवारणसम्भवे हेतुतावच्छेदकावच्छिन्नाधिकरणत्वप्रवेशे गौरवम् असम्भवो वा, विशिष्टनिरूपकाऽधिकरणत्वाऽप्रसिद्धेः। एवं धूमत्वादेर्व्याप्यताऽनवच्छेदकत्वे तादृप्येण कथायां हेतोरुपन्यासो न स्यादित्याशयः।

**ननु विशिष्टस्याऽतिरिक्तत्वे मानाभावः, न च गुणो विशिष्टसत्तावानिति प्रतीत्यभाव एव मानम्, गुणस्य विशिष्टनिरूपिताधिकरणत्वविरहादेव तादृशप्रतीत्यसम्भवात्, न च विशिष्टनिरूपिताधिकरणत्वं यद्यतिरिक्तं तदा विशिष्टमेवाऽतिरिक्तमस्तु विशिष्टाधिकरणतायाः क्लृप्ताधिकरणस्वरूपत्वाभ्युपगमात्, किञ्च विशिष्टस्याऽतिरिक्तत्वे द्रव्यं विशिष्टसत्तावदिति निर्णयदशायामपि द्रव्यं न सत्तावदिति निर्णयप्रसङ्गः, सत्ता-**

---

र्त्तत्वोभयस्मादित्यादौ भूतत्वे मूर्त्तत्वे च हेतौ स्वाधिकरणे गगने मनसि च साध्यसामानाधिकरण्यविरहेणाऽव्याप्तिप्रसङ्गादित्यत आह **उभयत्वमपीति। अत्रेदं बोध्यम्।** विरुद्धनिष्ठोभयत्वस्य एकविशिष्टाऽपरत्वरूपत्वाऽसम्भवाद् उभयत्वमात्रस्यैवातिरिक्तत्वं स्वीकृत्य तस्यैव च स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासम्बन्धेन हेतुत्वे न कोऽपि दोषः। ननु यथा परंपरासम्बन्धेन उभयत्वस्य हेतुत्वं तथा विशिष्टाऽनतिरिक्तत्वेऽपि वैशिष्ट्यस्यापि स्वावच्छिन्ननिरूपितसमवायेन हेतुत्व वक्तुं शक्यते इति चेद्। इदमेव "अनतिरिक्तत्वे तु" इत्यादिना वक्ष्यति।

**न चेति।** अस्य अस्तु इत्यनेनाऽन्वयः। न च विशिष्टकेवलयोर्भेदस्वीकारे केवलं सत्तायां द्रव्यत्वसामानाधिकरण्याभावविशिष्टसत्ताभेदसत्त्वात् द्रव्य सत्त्वादित्यादावतिप्रसङ्गो दुर्वार इति वाच्यम्। लक्षणे सामानाधिकरण्याभावोपलक्षितभेदनिवेशेन उक्तातिप्रसङ्गाभावात्। अत्र विशिष्टस्याऽतिरिक्तत्वेऽनन्तपदार्थकल्पनापत्तिः। न च तस्याऽतिरिक्तत्वे अनन्तविशिष्टाधिकरणताकल्पनापत्त्या साम्यमिति वाच्यम्। तस्याऽतिरिक्तत्वेपि उक्तरीत्या विशिष्टाधिकरणताकल्पनस्याऽऽवश्यकत्वात्। यदि च तस्याऽतिरिक्तत्वेऽतिरिक्तविशिष्टाधिकरणता न कल्प्यते विशिष्टसत्तावानिति प्रतीतौ च नव्यमते समवायस्य नानात्वेन विशिष्टसत्तासमवायस्य शुद्धसत्तासमवायादतिरिक्तत्वेन गुणे तादृशसमवायस्याऽभावेन विशिष्टसत्तावान्

केवलान्वयिनि चाऽव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्याहुः ।

भाववुद्धिं प्रति सत्तानिश्चयस्यैव विरोधितया तदसत्त्वात्, स्वानन्त्येण विरोधितान्तरकल्पने गौरवात्, एवं विशेषणविशेष्योभयग्राहकसामग्री-विरहेऽपि विशिष्टग्रहप्रसङ्गः, तदुभयग्राहकसामग्र्या विशिष्टस्य ग्रहे हेतुत्व-कल्पनेऽपि गौरवान्तरं स्फुटमेवेत्यत आह अनतिरिक्तत्वे त्विति ।

गुरवस्तु विशिष्टस्याऽतिरिक्तत्वादितिग्रन्थस्य विशिष्टनिरूपिताधि-करणत्वस्याऽतिरिक्तत्वादित्यर्थः । तथाच हेतुतावच्छेदकविशिष्टहेत्वधिक-रणावच्छेदेन तादृशवृत्तित्वाभाववत्त्वमपि निवेश्यमतो नाऽव्याप्तिरित्याशयः

ननु विशिष्टाधिकरणत्वं यदि नातिरिक्तं विशिष्टसत्तावानिति प्रतीतिः प्रत्येकनिरूपिताधिकरणताद्वयावगाहिनयैवोपपत्तेः, अन्यथा विशेषणा-भावनिर्णयदशायामपि विशिष्टसत्तावत्त्वप्रतीत्यापत्तेः, विशिष्टसत्ताबुद्धौ विशेषणाभाववत्ताज्ञानस्य प्रतिबन्धकतयाः स्वानन्त्येण कल्पनापातादि-त्युच्यते तदाप्याह अनतिरिक्तत्वे त्विति प्राहुः ।

विशेषणेति । विशेषण गुणकर्मान्यत्वं, विशेष्यं सत्ता, तयोः सामाना-धिकरण्यात्मकसम्बन्धस्यैवेत्यर्थः । साक्षात्सम्बन्धेन तस्यै व्यभिचारित्वा-दाह परंपरयेति । अवच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः । सत्त्वगुणकर्मान्य-त्वयोर्द्रव्ये एव सामानाधिकरण्यमिति प्रतीत्या तदुभयसामानाधिकर-ण्यस्य द्रव्ये एव सत्त्वान्न व्यभिचार इति भावः ।

नन्वेवं ज्ञेयत्वाधिकरणपटाद्यवच्छेदेन वाच्यत्ववद्वृत्तित्वाभावस्य पटी-यरूपादावेव सत्त्वात्तदधिकरणभिन्नत्वमस्त्येव ज्ञेयत्वादिहेतोः इत्यग्रे केव-लान्वयिन्यव्याप्तिप्रदर्शनमसङ्गतमत आह केवलान्वयिनीति । द्वितीयेति । तत्र

गुण इति प्रत्ययाऽसम्भवादिति विभाव्यते, तथापि न क्षतिः मन्मते द्रव्यत्वादेरेव विशिष्टाधि-करणतात्वात् । एवं च सति विशिष्टस्याऽतिरिक्तत्वेऽपि नाऽनन्तपदार्थकल्पनापत्तिः विशिष्ट-सत्त्वादेः क्लृप्तद्रव्यत्वादिरूपत्वस्यैव स्वीकारात् । इदमेव हि विशिष्टस्याऽतिरिक्तत्वं, यद्विशे-ष्याद्भिन्नत्वं, न त्वतिरिक्तपदार्थत्वमित्येतत्सर्वमालोच्याह क्लृप्ताधिकरणस्वरूपत्वाभ्यु-पगमादिति । स्फुटमेवेति । एव सर्वेषामेव वस्तूनां तत्तत्क्षणादिवृत्तित्वरूपविशेषणभेदाद् भिन्नत्वापत्त्या प्रत्यभिज्ञामात्रस्याऽप्रामाण्येन सजातीयत्वावगाहितावलम्बनेन वा स्थैर्योच्छेदे जगतः क्षणिकत्वापत्तिश्च स्यादिति ।

अथैवं मूलकृतः केवलान्वयिनि अव्याप्त्यभिधानमसङ्गतं हेतुतावच्छेदकसम्बन्धेन वा-च्यत्वसामानाधिकरण्याभावस्य सम्बन्धान्तरेण वर्त्तमाने प्रसिद्धस्य हेतावसत्त्वादिति शङ्कते नन्वेवमिति ।

दीधितौ प्रतीतिर्हि इति । अस्य अभाव गुणेऽवगाहते इत्यग्रिमेणाऽन्वयः । अव-

तच्चिन्त्यम् । सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिवत् सत्तानिष्ठद्रव्यत्व-

---

साध्यवद्भिन्नस्याऽप्रसिद्धत्वादिति भावः ।

यद्यपीदं वाच्यं प्रमेयादित्यादौ तादात्म्येन केवलान्वयिनि प्रथमलक्षणेऽव्याप्तिः संभवति प्रमेयावच्छेदेन वाच्यत्ववत्तादात्म्यकत्वविरहिणोऽप्रसिद्धेः, न च घटाद्यवच्छेदेन वाच्यत्ववत्तादात्म्यविरहो घटत्वादौ सुलभः, तथासति घटत्वं घटे न वाच्यमिति प्रतीत्यापत्तेः, तथापि स्वाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावोऽत्र लक्षणघटक इत्यभिप्रायेण द्वितीयलक्षणाभिधानम् । स्वपदस्य तत्तत्साधनव्यक्तिपरतया तादात्म्येन पटात्मकहेत्वधिकरणीभूतपटव्यक्तिनिरूपिततादात्म्येन वाच्यत्ववत्तादात्म्यकत्वाभावस्य पटावच्छेदेन पटत्वादावेव प्रसिद्धेः ।

वस्तुतस्तु केवलान्वयित्वं वृत्तिमदत्यन्ताभावाऽप्रतियोगित्वमात्रम्, न त्ववच्छेदकगर्भम्, तथाच तादात्म्येन किञ्चिदपि प्रमेयं न केवलान्वयीति द्वितीयलक्षणे एव तादृशकेवलान्वयिन्यव्याप्तिसम्भवात् यथाश्रुतमेव सम्यगित्याहुः ।

नव्यास्तु केवलान्वयिनि चाव्याप्तेरिति केवलान्वयिसामान्येऽव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्यर्थः । प्रथमलक्षणे यत्किञ्चित्केवलान्वयिनि तादात्म्येन प्रमेयादिहेतावव्याप्तावपि न क्षतिरित्याहुः ।

सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिः सत्तानिष्ठ द्रव्यत्वसामानाधिकरण्यस्याऽवच्छेदकत्वाभावं गुणादौ अवगाहते इत्यत्र समानाकारकप्रतीतिं दृष्टान्तयति द्रव्यत्वे गुणे इति । न तूक्तप्रतीतेर्गुणावच्छेदेन द्रव्यत्वे पृथिवीत्वसामानाधिकरण्याभावो विषयः, गुणस्य द्रव्यत्वाऽनाधिकरणतया तन्निष्ठपृथिवीवृत्तित्वाभावाऽवच्छेदकत्वाऽसम्भवात्, किन्तु द्रव्यत्वनिष्ठं यत्पृथिवीत्वसामानाधिकरण्यं तदवच्छेदकत्वाभाव एव गुणे विषय इति तद्वदियमपीति भावः । अवच्छेदकत्वाभावमिति । प्रात्यक्षिकप्रतीत्यभिप्रायेणेदं, सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यादिशाब्दस्थलेऽवच्छेदकत्वोपस्थापकपदान्तरविरहात्तदभावस्य गुणादौ बोधयितुमशक्यत्वात्, किन्तु सत्तानिष्ठं द्रव्यत्वसामानाधिकरण्यं न गुणावच्छेद्यमित्याकार एव तत्र बोधः । गुणादावित्यत्र सप्तम्यर्थस्य नञर्थेऽन्वयादिति ध्येयम् ।

---

च्छेदकत्वस्य निरूपकत्वस्येत्यर्थः । तेन सामानाधिकरण्यस्य व्याप्यवृत्तित्वमते तदवच्छेदकत्वस्याऽप्रामाणिकत्वेऽपि न क्षतिः । ननु द्रव्यत्वे गुणे इति दृष्टान्ताऽसिद्धिः, तत्रापि द्रव्यत्वे गुणावच्छेदेन पृथिवीत्वसामानाधिकरण्याभावो विषय इति वक्तुं शक्यत्वादत आह **न त्विति । गुणस्येति** । नित्यगुणस्येत्यर्थः । जन्यगुणे कालिकसम्बन्धेन द्रव्यत्वस्य वृत्ति-

सामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धेन सामानाधिकरण्यस्य वाऽभावस्य गुणेऽवगाहते न तु सत्तायामेव द्रव्यवृत्तित्वाभावम् ।

सत्ता न द्रव्यवृत्तित्ववाभाववती द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादि-सर्वजनसिद्धप्रतीतिबाधितत्वात् । बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेद-

---

**नन्वेवं तादृशप्रतीतेः सामानाधिकरण्याभावविषयकत्वमनुभवसिद्धं विरुद्धेन सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तदवच्छेदकत्वाप्रसिद्ध्या तादृशाऽवच्छेदकत्वाभावविषयकप्रतीतेर्भ्रमत्वापत्तिश्च स्यादत आह** परम्परासम्बन्धेनेति । **निरूपकताख्यस्वरूपसम्बन्धेनेत्यर्थः. न त्ववच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः । तथासति सत्तायां द्रव्ये न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिप्रसङ्गात्, सामानाधिकरण्यस्य व्याप्यवृत्तितया कुत्राप्यवच्छेदकत्वसम्बन्धेन तस्याऽसत्त्वात् ।** न त्विति । **तथाच द्रव्यं सत्त्वादित्यादावतिव्याप्तिरिति भावः ।**

**ननूक्तदृष्टान्तस्थले बाधकसत्त्वादवच्छेदकत्वाभावोऽस्तु प्रतीतेर्विषयः प्रकृते तु साक्षात्सामानाधिकरण्याभावविषयकत्वे न किंचिद्बाधकमस्तीत्यतो बाधकमाह** सत्ता नेति । **तथाच सत्तायां द्रव्यवृत्तित्वाभावसत्त्वे द्रव्यवृत्तित्वाभाववद्भिन्नत्वधीस्तत्र न स्यादिति भावः ।**

---

त्वात् । **निरूपकताख्यस्वरूपसम्बन्धेनेत्यर्थ इति** । स्वनिरूपकयावदाश्रयत्वरूपाऽवच्छेदकत्वसम्बन्धेनेत्यर्थः । अवच्छेदकत्वस्य प्रतियोगितावच्छेदकसंसर्गतया भानपक्षे वक्ष्यमाणरीत्या निरुक्तरूपताया आवश्यकत्वेन प्रतियोगितया भानपक्षेऽपि निरुक्तरूपताया औचित्याऽवर्जितत्वादिति भावः । नञ्रहितस्थलीयोक्तप्रत्ययेऽवच्छेदकत्वावगाहित्वस्याऽनुभविकत्वेन नञ्सहितस्थलीयोक्तप्रत्ययस्याऽपि तदावश्यकतया तद्रक्षणायाऽवच्छेदकत्वोत्कीर्तनम्, तथा चाऽन्यादृशावच्छेदकत्वसम्भवेनतादृशाऽवच्छेदकत्वमादायैवाऽनुभवनिर्वाह इति भावः । **तस्याऽसत्त्वादिति** । वृत्त्यनियामकतया तस्याऽभावप्रतियोगिताऽनवच्छेदकत्वाच्च, अतः परम्परासम्बन्धेनेत्युक्तम् ।

स्वरसतो यादृशशब्दात् यादृशार्थः प्रतीयते तादृशशब्दोल्लेखिप्रत्यये असति बाधके तादृशार्थविषयकत्वमेव युक्तम्, अतो दृष्टान्ते बाधकवशेनाऽन्यथोपपादनमस्तु सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतौ सामानाधिकरण्याभावविषयकत्वे किं बाधकमित्याशङ्कते **नन्विति** । सत्तायां द्रव्यवृत्तित्वाभावाभावस्य द्रव्यवृत्तित्वात्मकस्य सत्तायां द्रव्यवृत्तित्वाभावस्वीकर्तृमतेपि स्वीकारे क्षतिविरहः, तथाच एतादृशप्रतीतेर्बाधकत्वं न सम्भवति विरोध्यविषयकत्वादत आह **द्रव्यवृत्तित्वाभाववद्भिन्नत्वधीरिति** । तथाच सत्तायां द्रव्यवृत्तित्वाभावाभावस्य न ग्रहः किन्तु द्रव्यवृत्तित्वाभाववद्भेदस्यैव तद्बोधकसमानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारादिति भावः । **न स्यादिति** । भेदस्य व्याप्यवृत्तित्वादित्यर्थः । एवं च सत्तायां द्रव्यवृत्तित्वाभावाधिकरणभिन्नत्वसत्त्वादतिव्याप्तितादवस्थ्यम् ।

न एकत्र प्रतीत्या तदुभयोरेकत्र सिद्धिः। अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचा-

**ननु द्रव्यवृत्तित्वाभावोऽव्याप्यवृत्तिरेवेति तद्भेदोऽप्यव्याप्यवृत्ति-र्वाच्यः, तथा च द्रव्यगुणात्मकविभिन्नावच्छेदेन तयोः सत्तायां समावेशात्कुतो विरोध इत्यत आह** द्रव्यवृत्तित्वाभाव इति।

**नन्वेवं मूले न कपिसंयोगीति प्रतीत्या वृक्षादौ कपिसंयोगाभावोऽपि न सिध्येत्, तत्रापि वृक्षनिष्ठसंयोगावच्छेदकत्वाभावस्य मूलेऽवगाहनसम्भवादत आह** बाधकाभावादिति। **कपिसंयोगाभावो न वृक्षवृत्तिरित्यादि-प्रत्ययस्याऽसिद्धत्वादिति(१) भावः।**

**ननु द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रतीतिरेवाऽसिद्धा द्रव्य-वृत्तित्वाभावो गुणावच्छेदेन सत्तावृत्तिरिति प्रत्ययात्, एकशेषस्य कर्त्तु-**

एवं भेदस्याऽव्याप्यवृत्तित्वमतेऽपि तादृशप्रतीतेर्विरोध्यविषयकत्वोपपादने सत्तायां द्रव्यत्वसामानाधिकरण्याभावेऽपि तदधिकरणभिन्नत्वस्याऽप्यक्षततयाऽतिव्याप्तिवारणमशक्यमिति भावः।

**कुतो विरोध इति।** वस्तुतस्तु सत्ता न द्रव्यवृत्तित्वाभाववती इति प्रतीतिः सत्ताविशेष्यिका सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति 'सत्तायामिति' सप्तम्यन्तोल्लेखिप्रतीतिर्द्रव्यवृत्तित्वाभावविशेष्यिका, तथाच भिन्नविशेष्यकत्वान्न तयोर्विरोध इति।

केचित्तु—सत्तायां गुणे नेत्यादिप्रतीतिः सत्ताविशेष्यिका द्रव्यवृत्तित्वाभावविशेष्यिका वा, आद्ये बाधकमाह **सत्ता नेति**। द्वितीये बाधकमाह **द्रव्यवृत्तित्वाभाव—इति** दीधितिग्रन्थं योजयन्ति।

ननु द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वं गुणाद्यवच्छेदेन, न तु द्रव्यावच्छेदेन, तथाच द्रव्यावच्छेदेन द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वाभावसत्त्वेऽपि गुणाद्यवच्छेदेन तत्र सत्तावृत्तित्वाभावः सम्भवति, सत्तावृत्तित्वस्य सत्तात्वसामानाधिकरण्यरूपतया तस्य चाऽव्याप्यवृत्तितयाऽवच्छेदकभेदेनोभयोः समावेशात्कथं बाधकत्वम्। न च द्रव्यवृत्तित्वाभावनिष्ठसत्तावृत्तितायां कथं गुणस्याऽवच्छेदकत्वं, गुणेऽवच्छेद्याधिकरणीभूतद्रव्यवृत्तित्वाभावाधिकरणत्वविरहादिति वाच्यम्। द्रव्यवृत्तित्वाभावे गुणावच्छेद्यतायाः सत्त्वेन सत्ताद्रव्यवृत्तित्वाभावयोः सम्बन्धस्य (सत्तावृत्तित्वलक्षणस्य) तदवच्छेद्यत्वात्। अथवा यदभावो यदवच्छेदेन तदभाववन्निष्ठवृत्तित्वमपि तदवच्छेदेनेत्यनुभवानुसारेण तथोक्तिः इति चेन्न। अत्रापि उक्तयुक्त्या द्रव्यवृत्तित्वाभावे सत्तावृत्तिभेदावगावगाहितया बाधकत्वं निष्प्रत्यूहमेवेति, तथाच सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिः प्रमात्वे सति गुणावच्छेद्यद्रव्यवृत्तित्वाभावानवलम्बना तद्विरुद्धद्रव्यवृत्तित्वाभाववद्भिन्नत्वप्रकारकप्रमावत्त्वादित्यनुमान, द्रव्यवृत्तित्वाभावो सत्तावृत्तित्वाभावनिष्ठप्रमयिप्रकारतानिरूपितविशेष्यताशून्यः सत्तावृत्तिभिन्नत्वप्रकारकप्रमाविशेष्यतावत्त्वादित्यनुमानं वा फलितम्। तथाच द्रव्यं सत्त्वादित्यत्राऽतिव्याप्तिस्तदवस्थैवेति भावः। **असिद्धत्वादिति।** अननुभवादिति भावः। **अशक्यत्वादिति।** कपिसंयोगाभावे वृक्षाऽवृत्तित्वप्रत्यय इव द्रव्यवृत्तित्वाभावे सत्तावृतिभेदप्रत्ययेऽपि विवादसम्भवादिति भावः।

(१) 'असम्भवात्' इति पाठान्तरम्।

रिण्यतिप्रसंगाच्च, तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वाऽसंभवेनाऽसिद्धेः ।
न च तदभाववद्वृत्तित्वेन तत्र तदनुमेयम्, तद्वद्वृत्तिभिन्नत्वस्योपाधि-

---

मशक्यत्वादतो दोषान्तरमाह अतीन्द्रियेति । मनस्त्ववद् अणुत्वादित्यादावि-त्यर्थः । तत्र अतीन्द्रियसाध्यके अतीन्द्रियाऽसद्धेतौ ।

ननु प्रत्यक्षाऽसम्भवेपि अणुत्वं मनस्त्वसामानाधिकरण्याभाववत् मनस्त्वाभाववद्वृत्तित्वात् पृथिवीत्ववदित्यनुमानेनैव तत्र सामानाधिक-रण्याभावः सेत्स्यतीत्यत आह न चेति । साध्यवद्वृत्तिभिन्नत्वस्येत्यर्थः । तथा चोक्तानुमाने मनस्त्ववद्वृत्तिभिन्नत्वमुपाधिः, तस्य च साध्यव्याप-कत्वं घटत्वादौ साधनाव्यापकत्वं द्रव्यत्वादौ ग्राह्यम्, भेदस्याऽव्याप्यवृ-

---

दीधितौ अतीन्द्रियसाध्यके इत्यादि । अत्राऽतीन्द्रियसाध्यकमेकं अतीन्द्रियहेतु-कं चरममिति व्यभिचारिद्वयं प्रतीयते तत्राह मनस्त्ववदणुत्वादिति । तथाच गुरुत्ववद् घटाभावादित्यतीन्द्रियसाध्यकेन्द्रियके केवलघटाभाववृत्तित्वस्य, रूपवद आकाशाभावादित्येन्द्रियकसाध्यकातीन्द्रियहेतौ रूपवद्वृत्तित्वाभावस्य च प्रत्यक्षसंभवः, केवल हेतुवृत्तित्वस्य साध्यवद्वृत्तित्वाभावस्य च प्रत्यक्षसंभवेऽपि अतिव्याभिचारकस्य हेतौ साध्यवद्वृत्तित्वाभावस्य प्रत्यक्षासम्भवेन अन्यतरस्यैन्द्रियकत्वेऽतिव्याप्तिमत्त्वेऽपि स्वंऽशोऽपि प्रत्यक्षासम्भवेनाऽतिव्याप्तिदार्ढ्यप्रदर्शनायोभयातीन्द्रियत्वमुक्तमित्याशयः । वस्तुतस्तु चकाराऽदर्शनेन न व्यभिचारिद्वयलाभसंभव इति ध्येयम् ।

दीधितौ अतिप्रसङ्गाच्चेति । प्रमाणाभावेन अणुत्वे मनस्त्वसामानाधिकरण्याभावस्याऽसिद्ध्या तदधिकरणघटादिभिन्नत्वस्याऽणुत्वे सत्त्वादिति भावः । प्रत्यक्षेणैव तत्सिद्धिः स्यादत आह तत्रेति । उक्तस्थले इत्यर्थः ।

अन्ये तु अतीन्द्रियसाध्यके इत्यादिग्रन्थो भिन्नस्थलाभिप्रायकः इदं गुरुद्रव्यत्वात्, पृथिवी गुरुत्वादित्यादावित्यर्थः । तत्र–अतीन्द्रियसाध्यके व्यभिचारिणि, अतीन्द्रिये च व्यभिचारिणि । प्रत्यक्षाऽसंभवेनेति । अतीन्द्रियसाध्यके तत्सामानाधिकरण्याभावस्याऽतीन्द्रियधर्मावच्छिन्नप्रतियोगिताकत्वेनाऽयोग्यत्वाद् अतीन्द्रियहेतुके च योग्यस्याऽपि साध्यसामानाधिकरण्याभावस्य हेत्वंशे ग्रहो न सभवति विशेष्यस्याऽतीन्द्रियत्वादिति भाव इत्याहुः । तत्र पूर्वोक्तरीत्या उभयत्रातीन्द्रियत्वोपादानस्यावश्यकतया "ऽतीन्द्रियसाध्यके" इत्यादिग्रन्थस्यैकस्थलाभिप्रायकत्वस्यावश्यकत्वेन भिन्नभिन्नस्थलाभिप्रायकत्वस्याऽसंभवात् । एकस्थलाभिप्रायकत्वे एकवाक्यत्वं भिन्नभिन्नस्थलाभिप्रायकत्वे वाक्यभेद इति सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वाच्च । जलपृथिव्यन्यतरवृत्तित्वाभावस्य गुरुत्ववद्वृत्तित्वाभावसमनियततया तेजआद्यवच्छेदेन द्रव्यत्वे प्रत्यक्षसिद्धस्य साध्याव्यापकत्वनिश्चये तद्वद्वृत्तिभिन्नत्वस्योपाधित्वशंकाया अप्यभावेन वक्ष्यमाणोपाधित्वानुपपत्त्या च उभयातीन्द्रियत्वस्यैवाऽपेक्षितत्वात्तद्ग्रन्थस्य भिन्नभिन्नस्थलाभिप्रायकत्वेऽत्यन्ताऽसंगतेश्चेति ध्येयम् ।

तस्य चेति । मनस्त्ववद्वृत्तिभिन्नत्वस्य चेत्यर्थः । साध्यव्यापकत्वमिति । न च पक्षे साध्यसन्देहेन कथं साध्यव्यापकत्वनिश्चय इति वाच्यम् । अनुकूलतर्कविरहे उपाधित्व-

त्वात्। किञ्च इदमिदानीमितिप्रतीतिनियामकाविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः, तेन संबन्धेनाऽधिकरणे काले तेन संबन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः।

---

**त्तित्वे तु साध्यवद्वृत्तितत्तद्व्यक्तित्वावच्छिन्नभेदकूट उपाधिर्बोध्यः।**

**ननु उक्तोपाध्यप्रतिसन्धानदशायामुक्तानुमानादेव साध्यवद्वृत्तित्वाभावसिद्धिः तत्र भविष्यति, अन्यथा व्याप्त्यन्तरस्यापि तत्रातिप्रसङ्गादित्यत आह** किञ्चेदमित्यादि। **तथाच कालो गोमान् गोत्वादित्यादौ कालिकसम्बन्धेन हेतावव्याप्तिः, कालिकसम्बन्धेन हेतुमति महाकाले तेन सम्बन्धेन कालवृत्तित्वाऽभावस्य कुत्राप्यसत्त्वात्। न च कालावच्छेदेन गगनादावेव साध्यवद्वृत्तित्वाभावस्य प्रसिद्धिः, कालस्य गगनाद्यनधिकरणत्वेन तन्निष्ठवृत्तित्वाभावे कालावच्छेद्यत्वासंभवात्, कालिकसम्बन्धे-**

---

न्देहस्यापि दूषकत्वमित्याशयात्। भेदस्याऽव्याप्यवृत्तित्वे उपाधेर्न साधनाऽव्यापकत्वमत आह **भेदस्याव्याप्यवृत्तित्वे त्विति**। न चैवं प्रमाणाभावेन अणुत्वनिष्ठाऽतीन्द्रियमनस्त्वसामानाधिकरण्याभावादौ परमाण्ववच्छिन्नत्वाऽसिद्ध्या हेत्वधिकरणावच्छिन्नसाध्यसामानाधिकरण्याऽभावाऽप्रसिद्ध्या नातिव्याप्तिरिति वाच्यम्। ऐन्द्रियकरूपादिसामानाधिकरण्याभावे प्रत्यक्षेणावच्छिन्नत्वसिद्धौ अतीन्द्रियसामानाधिकरण्याभावः अवच्छिन्नः सामानाधिकरण्याभावत्वात् ऐन्द्रियकसामानाधिकरण्याभाववदित्यनुमानेन तत्सिद्धेः। अप्रसिद्ध्याऽतिव्याप्तिपरिहारे तथैवातीन्द्रियसाध्यके सद्धेतावव्याप्तेश्चेति ध्येयम्। साध्यवद्वृत्तित्वाभावसिद्धिः–मनस्त्ववद्वृत्तित्वाभावसिद्धिः, तत्र–अणुत्वे। **भविष्यतीति**। तथाचोपाधिशङ्काया सर्वदाऽसत्त्वेन तद्विरहदशायामतीन्द्रियहेतौ अतीन्द्रियसाध्यसामानाधिकरण्याभावानुमितिसम्भवान्नातिव्याप्तिरिति भावः। **अन्यथा व्याप्त्यन्तरस्येति**।

**कालावच्छेद्यत्वाऽसम्भवादिति**। अवच्छेद्याऽधिकरणसम्बन्धिन एवाच्छेदकत्वादिति शेषः।

अथ हेत्वधिकरणमहाकालावच्छेदेन महाकाले एव साध्यीभूतगवाधिकरणमहाकालनिरूपितवृत्तित्वाभावः प्रसिध्यति, महाकालस्य गगनादिवदवृत्तितया तत्र महाकालनिरूपितवृत्तित्वाभावसत्त्वात्, महाकालस्य तादात्म्यसम्बन्धेन स्वसम्बन्धितया स्वनिष्ठाऽभावाऽवच्छेदकत्वसम्भवाच्चेति चेन्न। हेतुतावच्छेदकसम्बन्धस्य वृत्तिनियामकत्वे तेनैव साध्यवद्वृत्तित्वाभावे वृत्तिनियामकसम्बन्धेनाऽवच्छेद्याधिकरणसम्बद्धमेवाऽवच्छेदकं, हेतुतावच्छेदकसम्बन्धस्य वृत्त्यनियामकत्वे तेन सम्बन्धेन साध्यवत्सम्बन्धित्वाभावे वृत्त्यनियामकेनाऽपि सम्बन्धेन सम्बद्धमधिकरणमवच्छेदकं, तथैवाऽनुभवात्। प्रकृते तु हेतुतावच्छेदककालिकसम्बन्धस्य वृत्तिनियामकत्वेन तदनियामकतादात्म्यसम्बन्धस्याऽवच्छेदकत्वानियामकत्वादव्याप्तिर्दुरुद्धरैव।

एतेन अवच्छेद्याधिकरणत्वमेवाऽवच्छेदकत्वे नियामकं न तु सम्बद्धत्वमात्रं तथैवाऽनुभवात्, अत एव सम्बन्धान्तरेण सम्बद्धे इत्युपेक्ष्य वर्त्तमाने इत्यभिहितम्। एवं चाऽधिकरणत्वानियामकतादात्म्यसम्बन्धस्याऽवच्छेदकत्वानियामकत्वेन कालिकसम्बन्धेन हेतावव्या-

न गगनादेर्वृत्तिमत्त्वस्वीकाराच्च ।

यद्यपि गोत्वाद्यधिकरणतत्तत्क्षणावच्छेदेन कालवृत्तित्वाभावस्य तत्तत्क्षणाऽसमानकालीने तत्तत्क्षणगोचरज्ञाने प्रसिद्धिः, तत्तत्क्षणस्याऽपि विषयतया स्वविषयकज्ञानाधिकरणतया तन्निष्ठतादृशवृत्तित्वाभाववत्तायामवच्छेदकत्वसम्भवात्, तथापि महाकाल एव कालिकसम्बन्धेनाधिकरणम् उपाधीनां तत्तत्क्षणवृत्तितायामवच्छेदकत्वमात्रमिति प्राचीनसिद्धान्तमनुसृत्येदम् ।

महाकालनिरूपितविशेषणतया वा हेतावव्याप्तिर्द्रष्टव्या । इदमिदानीमित्याकारकप्रतीतिनियामकविशेषणतायां यो विशेषस्तेन हेतुतायामिति व्याख्यया तादृशविशेषणतायाः प्राप्तेः ।

सामान्यत एव विभिन्नकालीनयोर्नाधाराधेयभाव इति मते नानुपपत्तिगन्धोपि, क्षणानां स्वसमानकालीनविषयतयापि अनधिकरणत्वेन तदवच्छेदेन ज्ञाने साध्यवद्वृत्तित्वाभावप्रसिद्ध्यसम्भवादिति ध्येयम् ।

अत्र हेतुतावच्छेदकसम्बन्धेन स्वाधिकरणे स्वनिरूपितहेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य विवक्षायां न कोपि दोषः । साधनीभूतगोत्वाधिकरणमहाकालावच्छेदेन गोत्वनिरूपितकालिकसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य घटादावेव प्रसिद्धत्वात् । साध्यसामानाधिकरण्यत्वं यद्धर्मावच्छिन्नाधिकरणावच्छेद्यहेतुवृत्तिकात्यन्ताभावप्रतियोगितानवच्छेदकं तद्धर्मवत्त्वं वा विवक्षितम्, इत्थं च वाच्यं प्रमेयादित्यादौ प्रमेयव्यक्तीनां भेदेऽपि न व्याप्तेर्भेद इत्यस्मद्गुरुचरणाः ।

केचित्तु स्वनिष्ठं यत्साध्यवद्वृत्तित्वं हेत्वधिकरणावच्छेद्यतदभावाधिकरणभिन्नत्वमित्यर्थः ।।तादृशाभावाधिकरणत्वं सद्धेतुस्थले स्वभिन्नव्यक्तावेव प्रसिद्धमतो नाव्याप्तिरित्याहुः ।

---

त्तिवत्तादात्म्यादिवृत्त्यनियामकसम्बन्धेन हेतौ व्यभिचारिणि अतिव्याप्तिसम्भवेन तदनुद्भावने दीधितौ न्यूनत्वमिति परास्तम् । वृत्तिनियामकसम्बन्धघटिताऽवच्छेद्यस्थले एव तदाधेकरणत्वस्याऽवच्छेदकतानियामकत्वात्, अन्यत्र च सम्बद्धत्वस्यैव तन्नियामकत्वेनोऽक्तस्थले तादात्म्यादेरप्यवच्छेदकतानियामकत्वेनाऽतिव्याप्त्यसम्भवात् ।

केचित्तु सर्वत्राऽधिकरणत्वघटितस्यैव तन्नियामकत्वेऽपि न क्षतिः वृत्त्यनियामकसम्बन्धेन साध्यवद्वृत्तित्वस्य हेत्वधिकरणस्य चाऽप्रसिद्ध्यैवोक्तव्यभिचारिणि नातिव्याप्तिः । न चैवं तेन सम्बन्धेन सद्धेतावव्याप्तिरिति वाच्यम् । प्राचीनमते तेन सम्बन्धेन व्याप्यताया अनभ्युपगमादित्याहुः ।

अन्ये तु उपलक्षणपरोयं ग्रन्थः, तथाच सर्वविषयकत्वादौ साध्ये विषयितया घटादिहेतौ अव्याप्तिः, विषयितया सर्वविषयकत्ववदसम्बन्धित्वस्याऽप्रसिद्धेः । न च घटादौ कपालाद्यवच्छेदेन तस्य प्रसिद्धिरिति वाच्यम् । तथापि हेत्वधिकरणावच्छिन्नस्य तस्याप्रसिद्धेरित्याहुः ।

कालिकसम्बन्धेन गगनादेर्वृत्तिमत्त्वस्वीकाराच्चेति । तथाच जगदाधारत्व-

साध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये यन्निष्ठत्वयदधिकरणावच्छेद्यत्वोभयाभावस्तत्त्वं व्याप्तिः, पर्वतीयरूपनिष्ठं यत्पर्वतावच्छेद्यं वह्निमत्संयुक्तत्वाभावाधिकरणत्वं न तद् धूमनिष्ठं, यच्च धूमनिष्ठं न तद् धूमाधिकरणावच्छेद्यम्, अधिकरणभेदेन तस्य नानात्वात्, अन्यथा पर्वते तदीयरूपे न वह्निमत्संयुक्तत्वमितिवत् पर्वते धूमे न वह्निमत्संयुक्तत्वमित्यादिप्रतीत्यापत्तेः, अतो वह्निमान् धूमादित्यादौ नाव्याप्तिः । व्याप्यवृत्तेरवच्छेदकत्वास्वीकारे तु तादृशाभावाधिकरणत्वसामान्ये यदधिकरणावच्छेद्यत्वसामान्याभावस्तत्त्वमित्येव वाच्यमित्यादिकं पुनरुक्तत्वादुपेक्षितम् । वा-

---

निर्वाह्यायेतरसम्बन्धेनाऽवृत्तेरपि गगनादेः कालिकसम्बन्धेन वृत्तिमत्त्वात्, कालावच्छेदेन सर्वत्र कालिकसम्बन्धेन साध्यवद्वृत्तित्वसत्त्वात् तद्विरहिणोऽप्रसिद्ध्याऽव्याप्तिरिति भावः ।

**अधिकरणतासामान्ये इति । न च** साध्यवद्वृत्तित्वाभावसामान्ये इत्येव कथं नोक्तमिति वाच्यम् । अधिकरणभेदेनाऽभावभेदाऽभावमते स्वावयवावच्छेदेन धूमादेर्वृत्तिवन्हिमत्संयुक्तत्वाभावस्यैव पर्वताद्यवच्छेदेन रूपादिवृत्तितया तादृशाऽभावे धूमनिष्ठत्वधूमाधिकरणपर्वतावच्छेद्यत्वोभयसत्त्वेन तादृशोभयाभावाऽसत्त्वाद् वन्हिमान् धूमादित्यादावव्याप्तिः स्यादतस्तदुपात्तम् । यद्यपि हेत्वधिकरणावच्छिन्नत्वस्याऽव्याप्यवृत्तित्वमते वन्हिमत्संयुक्तत्वाभावे रूपादिवृत्तित्वावच्छेदेन हेत्वधिकरणावच्छिन्नत्वं, धूमवृत्तित्वावच्छेदेन न हेत्वधिकरणावच्छिन्नत्वं किन्तु तदभावः,तथाच वन्हिमत्संयुक्तत्वाभावे हेत्वधिकरणावच्छिन्नत्वाभावप्रयुक्तोभयाभावसत्त्वान्नाऽव्याप्तिः, तथापि धूमवान् वन्हेरित्यादौ धूमवत्संयुक्तत्वाभावे वन्हिवृत्तित्वावच्छेदेनाऽयोगोलकाऽवच्छिन्नत्वसत्त्वेऽपि नौकादिवृत्तित्वावच्छेदेन तदभावसत्त्वेनोभयाभावसत्त्वादतिव्याप्तिः स्यादिति ध्येयम् ।

तादृशाभावाधिकरणतायामुभयाभावविवक्षणे तु न दोषः । रूपादिनिष्ठपर्वतावच्छिन्नतादृशाभावाधिकरणतातो धूमादिनिष्ठतादृशाभावाधिकरणताया भिन्नत्वात् धूमे पर्वते न वह्निमत्संयुक्तत्वमित्यप्रत्ययात् इत्यमुमेवार्थं मनसि निधायाह **पर्वतीयरूपनिष्ठमिति** । धूमवान् वह्नेरित्यादौ रूपादिनिष्ठायां पर्वतावच्छिन्नधूमसंयुक्तत्वाभावाधिकरणतायां महानसीयवह्न्यादिनिष्ठस्वावयवावच्छिन्नतादृशाभावाधिकरणतायां चोक्तोभयाभावसत्त्वेनाऽतिव्याप्तिः स्यादतः सामान्यपदम् । तादृशाभावाधिकरणतात्वावच्छेदेनोभयाभावलाभार्थम् तादृशाभावाधिकरणतात्वव्यापकोभयाभाव इति फलितम् । एवं च कालो गोमान् गोत्वादित्यत्र मूर्त्तमात्रस्य दिगुपाधित्वेन स्वाधिकरणपरमाण्वच्छेदेन गोत्वादौ वर्त्तमाने कालवृत्तित्वाभावे कालस्याऽनवच्छेदकत्वाल्लक्षणसमन्वयः । सत्तावान् जातेरित्यादौ कालिकसम्बन्धेन जातिसम्बन्धिध्वंसावच्छेदेन साध्यवद्वृत्तित्वाभावो जातौ प्रसिद्धस्तदनवच्छेदकं द्रव्यादिकमिति लक्षणसमन्वय इति ध्येयम् ।

अथ वन्हिमान् धूमादित्यादौ महानसीयधूमे पर्वतावच्छेदेन वन्हिमत्संयुक्तत्वाभावसत्त्वेन वन्हिमद्वृत्तित्वाभावाधिकरणतासामान्यान्तर्गतायां महानसीयधूमनिष्ठतादृशाधिकरणतायां हेतुमत्पर्वतावच्छेद्यत्वहेतुनिरूपितत्वोभयोः सत्त्वादव्याप्तिः । एवं व्याप्यवच्छेदकत्वास्वीकारे हेतुनिष्ठत्वाघटितलक्षणेऽपि बोध्या । धूमवत्कपालसम्भवे तु पर्वतसंयुक्तघटे वह्निमत्सं-

च्यत्वादिसाध्यके तादात्म्येन हेतावव्याप्तेश्च, वाच्यत्ववत्तादात्म्याभावाऽप्रसिद्धेः ।

**एतेन सत्तायां कर्मणि न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतौ कर्मण इव कर्मसत्त्वयोः समवायस्याप्यवच्छेदकत्वं भासते, अन्यथा इदानीं सत्तायां न द्रव्यत्वसामानाधिकरण्यमित्यादिप्रतीत्यापत्तेः, एतत्कालस्य कर्मानतिरेकात् । एवं च यद्धेतुव्यक्त्यधिकरणीयहेतुतावच्छेदकसम्बन्धे साध्य-**

युक्तत्व पर्वतावच्छेदेन, कपालावच्छेदेन तदभावोऽपि वर्त्तते कपालस्य समवायेन घटाधिकरणत्वात्, तथाच साध्यवद्वृत्तित्वाभावाधिकरणान्तर्गततादृशघटनिष्ठाधिकरणतावद्धेतुमत्कपालावच्छेद्यत्वसत्त्वाद्वह्निमान् धूमादित्यादावव्याप्ति , एवं धूमवान् वह्नेः पृथिवीत्वादित्यादौ च यावती साध्यवद्वृत्तित्वाभावाधिकरणता तस्याः व्याप्यवृत्तितया हेत्वधिकरणावच्छेद्यत्वाभावसत्त्वादतिव्याप्तिरिति कथमुक्तं जगदीशेन "इत्यादिकं पुनरुदक्षरत्वादुपेक्षितमिति" अव्याप्त्यादिदोषस्यैव जागरूकत्वादिति चेत् । अत्र ब्रूमः । लक्षणद्वये साधनवृत्तित्वं स्ववृत्तिहेतुतावच्छेदकधर्मावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतात्वसम्बन्धेन वक्तव्यम्, तथाच वह्निमान धूमादित्यत्र पर्वतवृत्तिधूमस्य स्ववृत्तिधूमत्वावच्छिन्नसंयोगसम्बन्धेन महानसादावपि सत्त्वात् तस्मिन्नपि धूमे एतादृशसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावो हेत्वधिकरणावच्छेदेन नास्ति, एवं वह्निधूमोभयवत्कपालसमवेतपर्वतसंयुक्तघटे एतादृशसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावो व्याप्यवृत्तिरेव तदधिकरणताया हेत्वधिकरणावच्छेद्यत्वाभावसत्त्वात् , स्ववृत्तिधूमत्वावच्छिन्नसंयोगसंबन्धावच्छिन्नाधिकरणतासम्बन्धेन तादृशघटस्य कुत्राप्यसत्त्वेन व्यधिकरणत्वादिति, धूमवान् वह्नेरित्यादौ च एतादृशसबन्धेन वृत्तित्वस्याऽव्याप्यवृत्तित्वेन तदवच्छिन्नाधिकरणतायां हेत्वधिकरणावच्छेद्यत्वसत्त्वान्नातिव्याप्तिरिति ।

वस्तुतस्तु वाच्यं प्रमेयादित्यादौ वाच्यत्ववत्तादात्म्याभावाप्रसिद्धेरित्यग्रिमग्रन्थेनाऽव्याप्तेरपि वक्ष्यमाणत्वादत्राप्यव्याप्तिर्न क्षतिमावहति व्यभिचारिणस्तु अव्याप्तिसम्भवे अतिव्याप्तेः का कथेति न्यायेन हेयत्वादिति सुधियो विभावयन्तु ।

**भासत इति** । तथाच पर्वते रूपे वन्हिमत्संयुक्तत्वं नास्तीति पर्वतसबन्धिरूपे वह्निमत्संयुक्तत्वाभावावगाहिप्रतीतौ यथा पर्वतस्यावच्छेदकत्वं विषयीक्रियते तथा पर्वतरूपयोः समवायोऽपि सम्बन्धविधयावच्छेदकः, पर्वतसंबन्धावच्छिन्नरूपे वह्निमत्संयुक्तत्वाभावावगाहने संबन्धस्याऽवच्छेदकत्वावगाहने बाधकाभावादिति भावः । अन्यथा—संबन्धस्याऽनवच्छेदत्वे । **इदानीमिति** । अत्र कालिकसम्बन्धोऽवच्छेदकतया भासते इति विशेषः । ह्रदादिनिष्ठसंयोगे वह्निमत्संयुक्तत्वाभावावच्छेदकत्वाद् वह्निमान् धूमादित्यादावव्याप्तिरतो **हेतुव्यक्त्यधिकरणीयेति** । हेत्वधिकरणनिष्ठेत्यर्थः । ह्रदादेरपि कालिकेन हेत्वधिकरणत्वात्, हेतुतावच्छेदकसम्बन्धेनेत्यपि देयम् । एवं हेत्वधिकरणमहानसादिनिष्ठसंयोगे धूमवत्संयुक्तत्वाभावावच्छेदकत्वाभावादतिव्याप्त्या उक्तहेतुतावच्छेदकसम्बन्धत्वावच्छेदेनेत्यपि वक्तव्यम् । एवमुभयाभावमादायाऽतिव्याप्तिवारणाय साध्यवद्वृत्तित्वभावावच्छेदकत्वत्वावच्छिन्नाभावो वाच्यः, तथाच निरुक्तहेतुतावच्छेदकसम्बन्धवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यवद्वृत्तित्वाभावावच्छेदकत्वत्वावच्छिन्नाभावत्वकत्वं वक्तव्यमित्यर्थः । **निरस्तमिति** । अत्र समवायस्यैकत्वेन गु-

१४ कुमारसंभवं महाकाव्यम्। महाकवि श्रीकालिदासवि०। सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम्। ( काव्यं२ ) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः। आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः। ( छंदः १ ) रु० ०-६

१६ कारिकावलि। मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। ( न्याय २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम्। काण्डद्वये हरिहर गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम्। हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्टोदिवि-शौच भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च। ( कर्मकाण्डं २ ) रु० ३—०

१८ संक्षेपशारीरकम्। मधूसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः। ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतायविरचितः। (कर्मकाण्डं ३) रु० १—०

२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम्। श्रीगन्धर्वराज पुष्पदन्ताचार्य-विरचितम्। हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब ) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम्। ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः। भाषाटीका-सहितः। ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः। (व्याकरणं ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका। श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः। (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः। ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः। (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। ( कर्मकाण्डवि० ४ ) रु० ०—४

२६ पौरोहित्यकर्मसारः। ( टिप्पणीसमलंकृतः ) सपरिशिष्ट द्वितीय तृतीयभागश्च। श्रीरमाकान्तशर्मणा संगृहीतः।

२७ लघुशब्देन्दुशेखरः । म० म० श्रीनागेशभट्टविरचितः अव्ययी-भावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त पर्वतीय कृतशेखरदीपकाख्येन टिप्पणेन समुद्भासितः । (व्या० ४ रु० ६—०)

२८ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् पञ्चमसर्गान्तम्, म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनक-[illegible] टीकया [illegible] । काव्य० [illegible]

२९ कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयन्त्रशास्त्रान्वितया पूर्णया जयमङ्गलरचितया टीकया समेतम् बहुविधपुस्तकपाठान् परिगृह्य, सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम० १ रु० ५—०)

३० न्यायकुसुमाञ्जलिः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः । (न्याय० ४ रु० ६—०)

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या—तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ७ यन्त्रस्थ)

३२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः । (मीमां० २ रु० १—०)

३३ न्यायवार्त्तिकम् । न्यायदर्शनवात्स्यायनभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम् । महर्षि-गोतमादिचरितसम्वलितबृहत्भूमिकासहितम् । (न्यायं नि० ५। रु० ६—०)

३४ शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । (भाग १–२–३–४) (वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

३७ काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर-वामन-जयादित्यविनिर्मिता । (व्याकरणं ८) रु० ६—०

३८ प्राकृतप्रकाशः । भामहकृतः । श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसाध-
नः । टिप्पण्या च संयोजितः । (व्याकरणं ७) रु० १—४

३९ जीवन्मुक्तिविवेकः । श्रीमद्विद्यारण्यस्वामिविरचितः । भाषानुवा-
दसमेतः । (वेदान्तं ६) रु० २—०

४० श्रीनारदीयसंहिता । ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिष-
ग्रन्थः । (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः । मेदिनीकारविरचितः । (कोशं १) रु० १—८

४२ मीमांसादर्शनम् । श्रीशबरस्वामिविरचितभाष्यसहितम्
सपूर्णम् । ( भाग१—२ ) ( मीमांसा ३ ) रु० १०—०

४३ न्यायदर्शनम् । श्रीगोतममुनीप्रणीतम् । श्रीवात्स्यायनमुनीप्रणीत-
भाष्यसहितम् । श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचि-
तन्यायसूत्रवृत्त्यनुगतम् । टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०

४४ दानमयूखः । विद्वद्वरश्रीनीलकण्ठभट्टविरचितः (धर्मशास्त्रं१) रु० १—८

४५ कालमाधवः । विद्वद्वरश्रीमाधवाचार्यविरचितः। (धर्मशास्त्रं२)रु० १—८

४६ भास्वती । श्रीमच्छतानन्दविरचिता । श्रीमातृप्रसाद ( दैवज्ञभू-
षण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण
भाषाटीकाभ्यां सहिता । (ज्योतिषं ३) रु० २—०

४७ फक्किकाप्रकाशः । उपाध्यायोपाह्ववैयाकरणकेसरीबिरुदाङ्कितमैथि-
लेन्द्रदत्तशर्मविरचितः । पं० सीतारामशर्मकृतटिप्पण्या
विभूषितः। (व्याकरणं ८) रु० १—४

४८ मिताक्षरा । श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या--श्रीम-
त्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामि-
कृता। शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च। (वेदा०७)रु०१-४

४९ काव्यप्रकाशः। श्रीमम्मटाचार्यविरचितः । पं० श्रीहरिशङ्करशर्मणा
मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः। (काव्य०५)रु० ४-०

५० अधिकरणकौमुदी । श्रीदेवनाथठक्कुरकृता । (मीमां० ४) रु० १—०

५१ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् म.म. श्रीमल्लिनाथ-
कृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण कृता
भावबोधिनी टिप्पण्या समलङ्कृतः संपूर्णम् । (काव्य ४) रु०१-४

५२ काथबोधः।साजनीकृत टीकोपेतः। दत्तात्रेय सम्प्रदायाऽनुगतः। रु०—८

५३ रसचन्द्रिका । श्रीविश्वेश्वरपाण्डेय निर्मिता। (काव्य० ६)रु०१—०

५४ अलङ्कारमुक्तावली । श्रीविश्वेश्वर पाण्डेयनिर्मिता। (काव्य०७)रु००-१२